UNIVERSITY OF TRAVANCORE

Trivandrum Sanskrit Series No. 181.

# TRIPURADAHANAM

OF

VĀSUDEVA

WITH HṚDAYAGRĀHIṆĪ THE COMMENTARY

OF

PANKAJĀKṢA




Edited by

SURANAD KUNJAN PILLAI, M. A.,

Honorary Director,

UNIVERSITY MANUSCRIPTS LIBRARY,

TRIVANDRUM.

Printed at the S. V. G. Press, Fort, Trivandrum.

1957/1132

[illegible]नविश्वविद्यालयः

अनन्तशयनसंस्कृतग्रन्थावलिः

ग्रन्थाङ्कः १८१

# त्रिपुरदहनम्





सम्पादकः

शूरनाड् कुञ्जन् पिळ्ळ, एम्. ए.,

पौरस्त्यग्रन्थप्रकाशनकार्यालयाध्यक्षः ।

अनन्तशयने एस्. वी. जी. मुद्रणालये मुद्रितम्

१९५७/११३२

मूल्यं सार्धरूप्यकम्

# PREFACE

Tripuradahana is one of the famous *Yamaka* poems by the celebrated Paṭṭattu Vāsudeva Bhaṭṭatiri, a very gifted Sanskrit poet and grammarian who flourished in Kerala circa 9th century A. D.* *Yamaka* is a peculiar literary device of repeating the same combination of letters in different senses. It is defined as:—

अर्थे सत्यर्थभिन्नानां वर्णानां सा पुनःश्रुतिः ।
यमकं ........................ ॥

(Kāvyaprakāśa Ullāsa IX, 6.)

Although modern critics have not much regard for the peculiar kind of ability displayed in *Yamaka kāvya*, it has to be conceded that only poets possessing extraordinary command of diction can compose such kāvya. And Vāsudeva Bhaṭṭatiri remains almost without a rival in this field in Sanskrit literature. The Yudhiṣṭhiravijaya published as No. 60 in the Kāvyamāla, is the best

* Vide Mahakavi Ullur's History of Kerala Literature Vol. I. P. 113—120.

known among his *Yamaka Kāvyas*$. The present work, Tripuradahana, is also an eminent example of Bhaṭṭatiri's skill in this special field of Yamaka. Tripuradahana contains three *Āśvāsas* and 194 stanzas mostly in Āryā metre.

Yamaka kāvya is a hard nut to crack and so the commentary of such a work is of especial value. The commentary Hṛdayagrāhinī published here for the first time is by Ānāvattu Paṅkajākṣa Piṣāroti The name of the

---

$ Vasu Battatiri's known Yamaka works are:—
(1) Yudhishtiravijaya (2) Tripuradahana (3) Saurikatha and (4) Nalodaya. But Vatakkumkur Raja Raja Varma says that Nalodaya is the work of Ravi Bhattatiri the father of Vasu Bhattatiri (Keraliya Samskrta Sahitya Caritam 1; p. 161). But in an old commentary of Nalodaya entitled Kavihrdayadarpana by Srikantha, mention is made of Vasudeva as the author.

'अथ श्रीमान् महाकविमहेश्वरो वासुदेवनामा वासुदेवानुस्मरणपूर्वकं प्रणिगोषितप्रबन्धप्रतिबन्धकृन्तनाय प्रथमविधेयप्रतिष्ठात्मिकां नमस्क्रियां तावदनुतिष्ठति ॥

'इति श्रीकण्ठाचार्यपुत्रेण श्रीकण्ठेन कृते नलोदयव्याख्याने कविहृदयदर्पणाख्ये चतुर्थ आश्वासः ॥ वासुदेवमहाकवये काव्यनिर्मात्रे नमो नमः ॥

नलोदयाह्वयस्यास्य व्याख्या काव्यस्य निर्मिता ।
श्रीकण्ठाचार्यपुत्रेण श्रीकण्ठेन मनीषिणा ॥'

Ms. No. 1021 of University Manuscripts Library. In this connection it may also be pointed out that in the colphons of several commentaries of Nalodaya available in our Library and in the Madras Mss. Library, Nalodaya is attributed to Kalidasa.

Vasudeva's work on grammar is Vasudevavijaya in five sargas.

Vasu Bhattatiri belonged to Pattattu Illom at Peruvanam some eight miles South of Trichur. In Yudhishthiravijaya he says:—

तस्य च वसुधामवतः काले कुलशेखरस्य वसुधामवतः ।
वेदानामध्यायी भारतगुरुरभवदाप्यनामध्यायी ॥
समजनि कश्चित् तस्य प्रवणः शिष्योऽनुवर्तकश्चिरतस्य ।
काव्यानामालोके पटुमनसो वासुदेवनामा लोके ॥

commentator and that of his uncle are mentioned in the colophons at the end of the three *āśvāsas*.

इति वैष्णवकुलालङ्कृतेः कविसहृदयसार्वभौमस्य करुणाकरनाम्नो विद्वत्प्रवेकस्य भागिनेयेन पङ्कजाक्षनाम्ना विरचितायां त्रिपुरदहनव्याख्यायां ........ ॥

Ānāyattu Karuṇākara Piṣāroti was a distinguished scholar and a contemporary of Uddaṇḍa Śāstri who adorned the court of Mānavikrama, Zamorin of Calicut (Vide History of Kerala Literature by Uḷḷūr Vol.II pp 71-72). Paṅkajākṣa Piṣāroti was Karuṇākara's nephew and he may be assigned to the 16th century A.D.

There are five commentaries of Tripuradahana in our collection, including Hṛdayagrāhiṇī which is the best among them. Of the remaining four, two are anonimous, viz Prakāśikā and another commentary which does not even give its name. Arthaprakāśika by Mukkolakkal Nīlakanṭhan Nampūtiri (17th century) and Arthadīpinī by Nityānandayati are the two other commentaries available here.

There is only one manuscript of this commentary in this Library, No. L. 150. The manuscript is in good state of preservation.

In preparing this edition I have been assisted by the Curator Śrī.K.S.Mahādeva Śāstri, and Pandits Śrī. V.G Nampūtiri and Śrī A. Rāmachandra Śāstri.

University Manuscripts Library, Trivandrum.
18 - 12 - 1956

Śūranāḍ Kuñjan Pillai,
HONORARY DIRECTOR.

श्रीवासुदेवप्रणीतं

# त्रिपुरदहनं

## (यमककाव्यम्)

(पङ्कजाक्षकृतया हृदयग्राहिण्याख्यया व्याख्ययोपेतम्।)

---

**वपुरतिगौरच्छायं जयति विभोरभिदधाति गौरच्छा यम्।**
**विषकटुका येनाहिश्रेणी भूषणमिव स्वकायेऽनाहि ॥ १ ॥**

शब्दार्थात्मकमाभाति विश्वं यत्र तदस्तु वः।
इष्टदायि परं ब्रह्म भूषयद्यादवं कुलम् ॥

काव्यारम्भे कविशिष्टाचारमनुसरन्निष्टदेवतास्वरूपानुसरणलक्षणं मङ्गलमाचरति — **वपुरि**त्यादिना। **विभोः** जगतां पत्युः, **वपुः** मूर्तिः, धर्मिणः प्रकाशस्य धर्मरूपा विमर्शशक्तिरित्यर्थः। **जयति** सर्वोत्कृष्टं वर्तते।

"**विभु**स्तु ना कुबेरेऽर्के त्रि तु सर्वगनित्ययोः।
स्वामिनि"

इति **केशवः**।

ननु सगुणनिर्गुणभेदेन वपुषो द्वैविध्ये कस्योत्कर्षः परामृश्यत इत्याशङ्कायां वपुर्विशिनष्टि — **अतिगौरच्छाय**मिति। **गौरी** अत्यन्तारुणा छाया कान्तिर्यस्य तत्तथोक्तम्।

"**गौर**स्तु ना *विरिञ्चेन्द्वोर्धववृक्षेऽसनद्रुमे।
शुक्लपीतारुणगुणेष्वेतद्युक्तेषु तु त्रिषु ॥"

इति **केशवः**।

---

* 'विरिञ्चे द्वे धववृक्षे' इति मुद्रितः पाठः

"अथ छायानातपशोभयोः ।
सूर्यपत्न्यन्तरे गेहे स्यात् पङ्क्तिप्रतिबिम्बयोः ॥"

इति च । ननु गौरशब्दस्य शुक्ल एवार्थः प्रसिद्धः । अरुणार्थस्त्वप्रसिद्ध एव । प्रसिद्धाप्रसिद्धयोः प्रसिद्धस्य मुख्यत्वम् । मुख्यामुख्ययोर्मुख्यमेवाङ्गीकरणीयम् । शुद्धसत्त्वमये भगवति शौक्ल्यमुपपन्नं च । तत्कथमेवं व्याख्यातम् । उच्यते — विवक्षाधीना हि शब्दप्रवृत्तिः । विवक्षा चात्र कवेरारुण्य एव; शक्तिपञ्चाक्षरीमन्त्रवाच्यस्य भगवतः परामर्शनीयत्वेनेष्टत्वात् । तदिष्टत्वं च 'योऽम्बिकालोलोऽपी'ति सम्बन्धोपक्रमे, 'सोमस्य महासेन' इति, प्रमेयोपक्रमे च 'मदनरिपुं सामान्यं निर्दयमगजोपगूढपुंसा मान्यमि'ति, उपसंहारे च 'येन भगवतोमारोपि' 'योऽम्बिकालीनमतिः' 'अङ्कार्धन्यस्तनगप्रियतनयाकुङ्कुमार्द्रधन्यस्तनग' 'वेष्टितरोमावल्याद्वयमसुपत्रातमनथगेमावल्याः' 'अन्तर्विदैवमनुविद्धोमं' 'रुद्रं नमश्चकारोमां च' इत्यादि मध्ये च तत्र भगवत्या उपादानात्,

"उपक्रमोपसंहारावभ्यासोऽपूर्वता फलम् ।
अर्थवादोपपत्ती च लिङ्गं तात्पर्यनिर्णये ॥"

इति न्यायेन सशक्तिके भगवति तात्पर्यादवसीयते । नन्वेवमपि शक्तिपञ्चाक्षरीमन्त्रवाच्यस्य परामृश्यत्वं कुतो निश्चितं, अष्टाक्षरीमन्त्रवाच्योऽपि भगवान् शक्तिको रक्तवर्णश्च, तस्य परामृश्यत्वं कथं न स्यात् । (उच्यते) — यथा महाकविर्माघः श्रीमद्गोपालकविंशत्यक्षरमन्त्रमूलतया

"श्रियः पतिः श्रीमति शासितुं जगज्जगन्निवासो वसुदेवसद्मनि ।
वसन् ददर्शावतरन्तमम्बराद्धिरण्यगर्भाङ्गभुवं मुनिं हरिः ॥"

इत्युपक्रम एव तस्य मन्त्रस्य ऋषिं नारदं ब्रह्माणं वा, देवतां कृष्णं च परामृश्य मन्त्राक्षरसङ्ख्यानियमितविंशतिसर्गोपेतं शिशुपालवधाख्यं काव्यं प्रणिनाय, तथानेनापि कविना शक्तिपञ्चाक्षरीमन्त्रमूलतया वपुरतिगौरच्छायमित्यादिमपद्य एव मन्त्रदेवतां परामृश्य तन्मन्त्रावयवपदसङ्ख्यायमिताश्वासत्रयोपेतत्वेनास्य प्रबन्धस्य प्रणीतत्वात् । किञ्च सत्त्वरजस्तमोमयानि जाग्रत्स्वप्नसुषु-

सिद्धेतवः, स्थूलसूक्ष्मकारणाख्यानि यानि शरीराणि तान्येव त्रीणि पुराणि, जाग्रत्स्वप्नसुषुप्तिसाक्षिणो विश्वतैजसप्राज्ञा एव त्रयोऽसुराः, इन्द्रियाण्येव देवताः, शुद्धसत्त्वमेव स्वर्गः, तुरीय आत्मैव शिवः, विमर्शात्मिका शक्तिरेव पार्वती, शास्त्रार्थविचारादिकमेव धनुराद्युपकरणानि, तत्त्वज्ञानमेव नयनाग्निः, तत्तत्कार्याणां स्वस्वकारणलयक्रमेण मूलकारणे शिवादिशब्दवाच्ये परस्मिन् वस्तुनि विलापनमेव दाहः, जगद्रूपेण परिणतायाश्शक्तेस्तत्त्वज्ञानेन जगद्रूपे गलिते शक्तिशक्तिमतोरेकीभावेनावस्थानमेव शिवयोरुपगूहनम् इत्यादिकयात्र मन्त्रप्रबन्धार्थयोरैक्यं विद्वद्भिरुन्नेयम्। अलमप्रस्तुतवस्तुप्रथनेन। प्रकृतमनुसरामः।

ननु धर्मिणि सत्येव धर्मेण भवितव्यं, विभोस्सत्त्वमेवानिश्चितं प्रमाणाभावाद् इत्याशङ्क्य विभुं विशिंषन् ईश्वरसद्भावे प्रमाणमाह— **अभिदधातीति**। **अच्छा** निर्मला। अपौरुषत्वेन रागादिमूलत्वाभावात् प्रमाणभूतेत्यर्थः। **गौः** वाक्, काण्डत्रयात्मकवेदलक्षणा। **यं**, विभुं। विशिनष्टि। **अभिदधाति** धर्मरूपतया देवरूपतया ब्रह्मरूपतया च प्रतिपादयति। ईश्वरसद्भावे श्रुतिः प्रमाणं भवतीत्यर्थः। अभिदधातीत्यस्य यया कयाचिद् वृत्त्या प्रतिपादन एव तात्पर्यं न त्वभिधावृत्त्याभिधाने। तथात्वे हि 'यतो वाचो निवर्तन्ते' 'यो मुक्तैर(व) गम्यते' 'अतद्व्यावृत्त्या यं चकितमभिधत्ते श्रुतिरपी'त्याद्यभियुक्तोक्तिविरोधः स्यात्।

"गौर्नादित्ये बलीवर्दे क्रतुभेदर्षिभेदयोः।
स्त्री तु स्याद् दिशि भारत्यां भूमौ च सुरभावपि॥

नृस्त्रियोः स्वर्गचन्द्राम्बुरश्मिदृग्बाणलोमसु।
अश्वानां प्रग्रहेऽप्येष यत्साधारणनामसु॥"

इति **केशवः**। अतिगौरच्छायत्वादेर्देवतान्तरसाधारण्यात् तद्व्यावृत्त्यर्थं भूयोऽपि विभुं विशिनष्टि – **विषकटुकेति**। **येन** विभुना **विषकटुका** विषेण गरलेन हेतुना कटुका तीक्ष्णा। **अहिश्रेणी** अहीनां सर्पाणां श्रेणी समूहः। **भूषणमिव** कटककटिसूत्राद्याभरणमिव। **स्वकाये** स्वस्य आत्मनः काये देहे। **अनाहि** बद्धा। 'णह बन्धन' इत्यस्मात् कर्मणि लुङ्। भगवतः शिवस्येत्यर्थः।

"रसे कटुः कटूवकार्ये त्रिषु मत्सरतीक्ष्णयोः।"

**इत्यमरः**। उपासकप्रह्वीभावमन्तरेण उपास्यदेवतोत्कर्षो न सम्भोभवतीति

जयत्यर्थो नमस्कारमाक्षिपति। अत्र विभोर्वपुषे नम इत्यर्थो लभ्यते। ततश्च 'आशीर्नमस्क्रिया वस्तुनिर्देशो वापि तन्मुखम्' इत्युक्तलक्षणकाव्यमुखाङ्गभूता नमस्क्रियाभिनिर्व्यूढा भवतीत्यनुसन्धेयम् ॥ १ ॥

अथ श्लोकद्वयेनोत्कर्षमुपपादयति–

**येन च कालोऽलोपि स्मरं च निजघान योऽम्बिकालोलोऽपि।**
**योऽस्थाद् विषमास्वाद्य स्वस्थः सुरततिषु जातविषमास्वाद्यः ॥ २ ॥**

**येनेति।** चशब्दो वाक्यार्थसमुच्चयार्थः। **येन** विभुना **कालः** अन्तकः **अलोपि** विलयं नीतश्च। सर्वेषामपि प्राणहर्तारमन्तकं यः प्राणैर्वियोजितवान् तस्योत्कर्षः किमुच्यत इति भावः। **योऽम्बिकालोलोऽपि** अम्बिकायां पार्वत्यां लोलः सरागोऽपि। अपिशब्दोऽम्बिकालोलत्वस्मरहन्तृत्वयोः परस्परविरुद्धतां द्योतयति। **स्मरं** कामं **निजघान च** तृतीयनेत्राग्निना भस्मसादकरोत्। **यः सुरततिषु** देवसमूहेषु **जातविषमासु** सतीषु जातम् अमृतमथनसमयसञ्जातं जगद्भस्मीकरणोन्मुखं कालकूटमालोक्य उद्भूतं विषमं वैषम्यं व्याकुलता यासां तथोक्ताः (तासु)। **विषं** गरलं **आस्वाद्य** सुरततिवैषम्यजिहीर्षया पीत्वा। **स्वस्थः** विषपानजनितविक्रियामप्राप्तस्सन् **अस्थात्** स्थितवांश्च। चशब्दोऽत्रानुषञ्जनीयः। ननु कोऽयमनुषङ्गो नाम। उच्यते – पूर्ववाक्ये चरितार्थस्य वाक्यस्य उत्तरवाक्येऽभिसम्बन्धोऽनुषङ्गः। विभुं विशिनष्टि– **आद्य** इति। आदौ भवः आद्यः। 'दिगादिभ्यो यत्' (पा० सू० ४. १. ३३.) इति यत्प्रत्ययः। जगत्कारणभूतस्य किं नाम दुष्करमिति भावः ॥ २ ॥

**कुलिशं चक्रमुरुरसिः स्थेयसि नृभुजो न यस्य चक्रमुरुरसि।**
**सदहनविधुतोयेनद्युधरातममरुन्मयेन विधुतो येन ॥ ३ ॥**

**कुलिशमिति।** चशब्दोऽत्राप्यनुषञ्जनीयः। **यस्य नृभुज** इत्यनुवादात् तच्छब्दवाच्योऽपि नृभुगिति विज्ञायते। नॄन् नरान् भुङ्क्त इति नृभुक्, राक्षसः। स चात्रोपपत्तिवशाद् रावणः। **येन** विभुना। **स** नृभुग् रावणो **विधुतश्च** कम्पितोऽभूत्। भुजकण्डूविनोदनाय कैलासमुद्धृत्योत्क्षिपन् भग-

वदङ्गुष्ठाग्रस्पर्शादसह्यगौरवकैलासाधश्शायितया निश्चेष्टीकृत इत्यर्थः । कस्यचिद्रक्षसो जडीकरणेन को विभोरुत्कर्ष इत्याशङ्क्य नृभुजो लोकोत्तरतामाविश्चिकीर्षुः तं विशिनष्टि – **कुलिश**मिति । यस्य नृभुजः, **उरसि** वक्षःस्थले, **कुलिशं** ऐन्द्रं वज्रं, **चक्रं** वैष्णवं सुदर्शनं, **उरु**र्महान् **असिः** नैर्ऋतः खड्गश्च । उपलक्षणमेतदन्येषामप्यायुधान्तरस्य । एतानि **न चक्रमुः** पदविक्षेपं न चक्रुः । त्रैलोक्यनाथानामप्यायुधानि यदुरःस्थले निपत्य कुण्ठीबभूवुरित्यर्थः । तत्र हेतुः– **स्थेयसि** स्थिरतरे, शिलातलवदतिकठिने इत्युरोविशेषणम् । विभुं विशिनष्टि– **दहने**ति । **दहनो** वह्निः, **विधुश्च**न्द्रः, **तोयं** जलं, **इन** आदित्यः, **द्यौ**राकाशं, **धरा** भूमिः, **आत्मा** जीवः, **मरुद्वा**युः, एतन्मयेन अष्टमूर्त्यात्मकेनेत्यर्थः - विश्वात्मनि परमेश्वरे एतदुपपन्नमिति भावः । तस्य विभोरिति पूर्वेण सम्बन्धः ॥ ३ ॥

अथ विशिष्टशब्दार्थप्रतिभालाभाय वाग्देवतां प्रार्थयते —

**स्फुरतु सरस्स्वत्यन्तस्वच्छेन्दुकलेव नः सरस्वत्यन्तः ।**
**उत्तुङ्गतमोहान्या नित्यं लोकान् करोति गतमोहान् या ॥ ४ ॥**

**स्फुरत्वि**ति । **सरस्वती** शब्दाधिष्ठात्री परा देवता । **नः** अस्माकम् । **अन्तः** मनसि । **स्फुरतु** प्रकाशताम् । प्रार्थनायां लोट् । कीदृशी । **अत्यन्तस्वच्छा** अतिशयेन निर्मला, शुद्धसत्त्वमयत्वाद्धवलेति यावत् । सरस्वती हि धवलवणा भवति । यथाहुः – पञ्चाशद्वर्णभेदैरित्यादिना । कुत्र किमिवेत्यत्राह – सरस्स्विति । **सरस्सु** जलेषु **इन्दुकलेव** शशिरेखेव । यथेन्दुकला जले प्रतिबिम्बतया स्फुटं **स्फुरति** तथास्मन्मनसि सरस्वत्यपि स्फुरतु इत्यर्थः । उपमया सरस्वतीस्फुरणस्य स्फुटोपलम्भता प्रत्याय्यते ।

"सरस्तु सलिले क्लीबं तटाके तु नपि स्त्रियाम् ।
तत्रापि स्व्यर्थवृत्तित्वे सरसीति स्त्रियां पुनः ॥
महासरस्सु सरसीं दाक्षिणात्याः प्रयुञ्जते ।"

इति **केशवः** । पूर्णेन्दोरुपमानतायां सकलङ्कत्वदोषसंभवाद् अत्यन्तस्वच्छत्वमुपमानस्य न स्यात् । तत्कलायास्तु कलङ्कदोषो नास्त्येवेतन्दिुकलाया उपमा-

नतयोपादानमिति बोद्धव्यम् । सरस्वतीस्फुरणस्य किं फलमित्याशङ्कायां तां विशिनष्टि -- **या** सरस्वती **उत्तुङ्गतमोहान्या** उत्तुङ्गस्यातिमहतः तमोगुणस्याज्ञानकारणस्य हान्या नाशेन । **नित्यं** नियमेन, **लोकान्** भक्तिपुरस्सरं भजमानान् जनान् । **गतमोहान्** नष्टाज्ञानान् करोति । "लोकस्तु भुवने जने" **इत्यमरः**।

"**तम**स्तु क्ली पापे नरकशोकयोः ।
**गुणत्रय**स्यान्यतमे साङ्ख्यानां प्रकृतौ बले ॥
अज्ञाने ज्वलति ध्वान्ते रात्रौ राहौ च नामतः ।"

इति **केशवः** ।

"**मोहः** पुनः स्यादज्ञाने मूर्च्छायां क्रोध एव च ।
अजयस्त्वाह तन्द्रायाम्"

**इति च** ।

सरस्वत्यामन्तःस्फुरितायां सकारणाज्ञाननिवृत्त्या शुद्धे मनसि विशिष्टशब्दार्थप्रतिभया भवितव्यमिति भावः ॥ ४ ॥

अथाभिधित्सितस्यार्थस्य इतिहासपुराणमूलत्वात् तद्याथातथ्यस्फुरणाय तत्प्रणेतारं व्यासं प्रार्थयते —

**यो भासा भा वियतस्तुलयति भारतसुधाम्भसाभावि यतः ।**
**जगदेनोहृदयमलं हरतु व्यासाम्बुधिश्च नो हृदयमलम् ॥ ५ ॥**

**य** इति । **चशब्दः** समुच्चये । **अयं** वियत्सदृशवर्णत्वादिविशिष्टो **व्यासाम्बुधिश्च,** न केवलं सरस्वत्येव व्यासाम्बुधिरपि । व्यासाम्बुधिरिति मयूरव्यंसकादित्वात् रूपकसमासः । **नः** अस्माकम् । **हृदयमलं** हृदयस्य मलमप्रतिपत्त्यन्यथाप्रतिपत्तिलक्षणदोषम् । **अलमत्यर्थं हरतु** अपनयतु, प्रार्थनायां लोट् । अम्बुधित्वमुपपादयितुमाह – **य** इति । **यो** व्यासाम्बुधिः **भासा** निजया देहकान्त्या । **वियतः** आकाशस्य **भाः** भासः । बहुवचनमविवक्षितम् । कान्तिमित्यर्थः । **तुलयति** उन्मिमीलयते । वियत्सदृशो नीलाभ इत्यर्थः । वस्तुतः वियतो नीरूपत्वेऽपि लोकप्रतीत्यनुसारेणैवमुक्तम् । **यतः** यस्माद् **भारतसुधाम्भसा** भारतं श्रीमहाभारताख्य इतिहासः तदेव यत् सुधाम्भः पीयूषजलं तेन । **अभावि** उद्भूतम् । अत्रामृतोत्पत्तिभूरम्बुधिरित्येव विवक्षितम् । न तु क्षीराम्बुधिरिति ।

तथात्वे हि नीलवर्णत्वमुक्तमनुपपन्नं स्यात् । **जगदेनोहृदिति** । अत्रार्थाद्विभक्तिविपरिणाम इति नीत्या पञ्चम्यन्तो यच्छब्दः प्रथमान्ततया विपरिणतोनुषज्यते । यः **जगदेनोहृत्** जगतो जगद्वासिनो जनस्य यदेनः पापं तद्धरति नाशयतीति तथोक्तः । अत्राम्बुधिरिव व्यासः सुधाम्भ इव भारतमिति विगृह्य "उपमितं व्याघ्रादिभिस्सामान्याप्रयोगे" (पा० सू० २. १. ५६) इति समासं विधाय उपमाश्रयेणापि व्याख्यातुं शक्यते । अतोऽत्रोपमारूपकयोस्साधकबाधकाभावात् सन्देहसङ्करः ॥ ५ ॥

अथ प्रारिप्सितप्रबन्धप्रचयगमनाय

"यद्यदाचरति श्रेष्ठस्तत्तदेवेतरे जनाः ।
स यत् प्रमाणं कुरुते लोकस्तदनुवर्तते' ॥

इति न्यायाद्राजपरिग्रहादेव लोकपरिग्रहः स्याद्राजपरिग्रहश्च तत्प्रशंसयैव भवेदिति मन्यमानः त्रिभिः श्लोकैः तदानीन्तनं राजानमभिष्टौति –

**अस्ति स कविलोकनतः क्षितिभृदरिर्यस्य सैनिकविलोकनतः ।**
**बहुविपदि क्षुद्रवति क्ष्माभृति कुर्वन् पदानि दिक्षु द्रवति ॥ ६ ॥**

**अस्तीति** । **स** तादृशः **क्षितिभृत्** राजा **अस्ति** विद्यते । जन्मसाफल्यात् स एव सत्तां लभत इत्यर्थः । क्षितिभृतश्चिरातीतत्वेऽपि कवेरुक्तौ विद्यमानत्वाल्लट्प्रयोगः । अद्यापि यशश्शरीरत्वेन विद्यमानत्वाद्वा । कीदृशोऽसावित्यत्राह – **कविलोकेति** । **कविलोकनतः** कवयो विद्वांसः काव्यकृतश्च, उभयेऽप्यत्र विवक्षिताः तेषां लोके समूहे विषये नतः प्रह्वीभूतः । "प्राज्ञकाव्यकृतौ कवी" **इत्यमरः** । अनेन स्वयं विद्वान् काव्यकृच्चेत्युक्तं भवति । वैदुष्यं काव्यकृत्त्वञ्च विना तन्नमनानुपपत्तेः । एतद्धि जन्मनः फलमिति भावः । कविंलोके नतः इति वा विग्रहः । वैदुष्यं काव्यकृत्त्वं च सर्वसाधारण एव गुणः । अथ राजैकविषयान् गुणान् दर्शयति – **अरिरिति** । **यस्येत्येतत्**

"एकस्यैवोभयार्थत्वे तन्त्रमित्यभिधीयते ।
तच्च काकाक्षिवत् कापि भित्तिदीपसमं क्वचित् ॥"

इत्युक्तलक्षणेन भित्तिदीपायमानेन तन्त्रेणारिसैनिकयोः संबध्यते । **यस्य क्षितिभृतः अरिः** शत्रुः । यस्य **सैनिकविलोकनतः** सैनिकानां भटानां विलोकनतः

**वीक्षणादेव हेतोः, क्षुद्रवति** क्षुत् क्षोदः पीडा तां राति ददातीति क्षुद्रा नृशंसा व्याघ्रादयो हिंस्रा इत्यर्थः; तद्युक्ते। तथा **बहुविपदि** बह्वयो विविधा विपदः कण्टकशङ्कुदवाग्न्यादिभ्यः पादाघातदेहदाहाद्यापदः यस्मिन् तादृशि। **क्ष्माभृति पर्वते पदानि** अङ्घ्रिन्यासान् कुर्वन् **दिक्षु द्रवति** धावति।

''क्षुद्रो दरिद्रे कृपणे नृशंसेऽल्पनिकृष्टयोः।''

इति **केशवः**।

''पदमङ्घ्रौ शरे त्राणे व्यवसायापदेशयोः।
चिह्नेऽङ्घ्रिचिह्नेऽङ्घ्रिन्यासे पद्यभागेऽशुवस्तुनोः॥
स्थाने वाक्ये सुप्तिङन्ते माने पञ्चदशाङ्गुलौ।''

इति च। अयमर्थः – यस्य शत्रवः सैन्यदर्शनादेव भीताः पलाय्य पर्वतगुहासु तिष्ठन्तस्तत्रापि तदागमनभिया स्थातुमशक्ताः नानादिक्षु पलायन्ते इति। अनेन प्रतापवत्ता दर्शिता॥ ६॥

**साधूनां पाता यः स्थिरव्रतो यश्च पापिनां पाताय।
यस्मादुर्व्यापारं प्रीतिं यस्यामलं विदुर्व्यापारम्॥ ७॥**

**साधूनामिति**। यः **साधूनां** सतां **पाता** रक्षिता च भवति। **यः पापिनां** मर्यादातिक्रान्तानां **पाताय** नाशाय **स्थिरव्रतश्च** स्थिरं दृढं व्रतमभङ्ग्यानुष्ठानं यस्य स तथोक्तः। आभ्यां शिष्टरक्षणं दुष्टनिग्रहश्चोक्तः। शिष्टरक्षणादपि दुष्टनिग्रहस्य प्रजाप्रीतिकरत्वं वक्तुं पापिनां पातं विशिनष्टि – यस्मादिति। **यस्मात्** पापिनां पाताद्धेतोः **उर्वी** उर्वीस्थो जनः। **अरम**त्यर्थं, शिष्टरक्षणादप्यधिकम्। **प्रीतिं** मुदम् **आप** पूर्वमादिराजादेवारभ्य प्राप्तवती तस्मै पापिनां पातायेति सम्बन्धः। ननु यस्मान्महीभृतः उर्वी सत्पालनात् अरं प्रीतिमापेत्यर्थः कस्मादुपेक्षितः। उच्यते – कवेरुक्तिसमये राजा वर्त्तमान एव। अत एव क्षितिभृदस्ति, अरिर्दिक्षु द्रवति, व्यापारं विदुरिति, राजशेखरं व्यालपलीति चः। तस्यैव राज्ञः प्रजाप्रीतिकरत्वप्राप्तेः परोक्षत्वेन लिट्प्रयोगस्यानुपपत्तेरित्थं व्याख्यातम्। **यस्य** क्षितिभृतो **व्यापारं** प्रवृत्तिम्। **अमलं** निर्दोषं **विदुः** जानन्ति, सन्त इति शेषः। अनेन विहिताचारपरत्वमुक्तम्॥ ७॥

**स्वपदपयोजनते यं सदैव सम्पादकं श्रियो जनतेयम् ।**
**भूतिधरं व्यालपतिस्फुरत्करं राजशेखरं व्यालपति ॥८॥**

**स्व**पदेति । **इयं** भूलोकान्तर्वर्तिनी **जनता** जनसमूहः । **यं राजशेखरं व्यालपति** राज्ञां शेखरवदलङ्कारभूतत्वाद् राजशेखर इति **कथयति** । **कीदृश** इत्यत्राह – **स्वपदे**ति । **स्वपदपयोजनते** स्वपदपयोजयोः चरणाम्बुजयोः नते इष्टार्थसिद्धये प्रणते जने । **सदैव** सर्वस्मिन् काल एव । **श्रियः** सम्पदः । **सम्पादकं** दातारमित्यर्थः ।

"श्रीरिन्दिरायां शोभायां स्यात् सम्पत्तिलवङ्गयोः ।"

इति **केशवः** ।

अनेन दानपरत्वमुक्तम् । राज्ञां हि धर्मस्सर्वस्वदानमेव । उक्तं च **मुरारिणा** –

हुतमिष्टं च तप्तं च धर्मश्चायं कुलस्य ते ।
गृहात् प्रतिनिवर्तन्ते पूर्णकामा यदर्थिनः ॥

इति । सर्वदा दानस्य प्रभूतं रत्नं विनानुपपत्तेस्तदुपपादनाय विशिनष्टि – **भूतिधरमि**ति । भूतिस्सम्पत् ।

"भूतिर्भस्मनि सम्पत्तावुत्पत्तौ भरुटेऽपि च ।"

इति **केशवः** ।

धरतीति धरः पचाद्यच् । भूतेर्धर इति विगृह्य "कृद्योगा च षष्ठी समस्यत इति वक्तव्यम्" (वा०. २. २. ९.) इति समासः । प्रभूतधनमित्यर्थः । तथा **व्यालपतिस्फुरत्करं** व्यालपतिः सर्पश्रेष्ठः तद्वत् स्फुरन्तौ शोभमानौ **करौ** यस्य स तथोक्तः । उपलक्षणमेतदवयवान्तरसौष्ठवस्य । अनेन महापुरुषलक्षणशालित्वमुक्तम् । अत्र राजा चन्द्रः शेखरश्शिरोभूषणं यस्य स राजशेखरश्शिवः ।

"राजा ना सोमवल्ल्यां च चन्द्रे च द्वे तु पार्थिवे ।
क्षत्रिये च प्रभौ च त्रिरस्मिन्नर्थत्रये यदा ॥
स्त्र्यर्थे वृत्तिं तदा राज्ञि"

इति केशवः ।

सोऽपि स्वपदप्रयोजनसे श्रियस्सम्पादकश्च, भूतिभस्म तद्धारकश्च, व्यालपतिभिः भूषणतां प्राप्तैः स्फुरत्करश्च, इति शिवविषयो योऽर्थः स च प्रकरणेनाभिधाशक्तेः राजनि नियन्त्रितत्वाद् ध्वनेर्विषय एव । ८ ॥

*इत्थं विरचितां राजस्तुतिं प्रकृत उपयोजयन्नाह –

**निजया तन्वा नेत्रप्रमोदनं प्राणिनां वितन्वानेऽत्र ।**
**मतिबलमासाद्य मितं पुरदहनं रविभुवा समासाद् यमितम् ॥ ९ ॥**

**निजयेति** । अत्र एवं दर्शितगुणविशिष्टे एतस्मिन् क्षितिभृति । **निजया** आत्मीयया । **तन्वा** देहेन । **प्राणिनां** सचेतनानां जन्तूनाम् । **नेत्रप्रमोदनं** नयनप्रीतिं **वितन्वाने** । **रवि**रिति कवेः पितुर्नाम, रवेर्भवतीति **रविभूः**, रविभुवेत्यात्मनः तटस्थीकारेणोक्तिः; मया इत्यर्थः । **मितं** अल्पम् । **मतिबलं** बुद्धिशक्तिम् । **आसाद्य** प्राप्य इत्यौद्धत्यपरिहाराय । **पुरदहनं त्रिपुरदाहाख्यं** श्रीपरमेश्वरचरितम् । **समासात्** समासस्संक्षेपः तमाश्रित्येति ल्यब्लोपपञ्चमी, ग्रन्थतः संक्षिप्येत्यर्थः । **यमितं,** यमशब्दो युगलपर्यायः तस्माद्यमवदाचष्ट इति विगृह्य "तत्करोति तदाचष्ट" इत्याचष्ट इत्यर्थे "प्रातिपदिकाद्धात्वर्थे बहुलमिष्ठवच्च" (गण० सू०) इति णिचि इष्ठवद्भावे च, "तुरिष्ठे मेयस्सु" (पा० सू० ६. ४. १५४) इत्यधिकृत्य "विन्मतोर्लुक्" (पा० सू० ५. ३. ६५) इति मतोर्लुकि, 'टेः' (पा० सू० ६. ४. १४३) इति टिलोपे च कृते यमि इति सिद्ध्यति । तस्मात् कर्मणि क्तप्रत्यये रूपम् । यमकत्वेन संदृब्धमित्यर्थः ।

"निजं तु त्रिस्सनातने ।
आत्मीये च स्वभावे तु क्ली पुंसि त्वात्मनि स्मृतम् ॥"

इति केशवः ।

---

* रामसमत्वादेव स्रष्टा रामाख्यमकृत मत्वा देवः ।
यं स च रक्षोपायं चक्रेऽस्य च कर्मजनितरक्षोपायम् ॥
इत्ययं श्लोकः नवमतया ग्रन्थान्तरेषूपलभ्यते ।

अत्र निजेत्यनुक्तावपि तनोरात्मीयत्वावगतौ सत्यां यो निजं देहमपि प्रजाप्रमोदसाधनतामनयत् तस्य किमुतान्यदैहिकं धनक्षेत्रादिकम् । तत्तु तत्साधनमेवेति द्योतयितुं निजयेत्युक्तम् । नेत्रप्रीतेस्तु चेतनत्वमेवोपाधिः । न तु मनुष्यत्वादिकमिति द्योतयितुं प्राणिनामित्युक्तम् । काव्यनिर्माणस्य कालकथनेन स यच्छीलस्तच्छीलाः प्रकृतयोऽस्य भवन्तीति न्यायात् ताच्छील्यमेव मम काव्यनिर्माणे प्रेरकं, नतु कवित्वशक्तिरिति द्योत्यते । राज्ञः कवित्वं च कविलोकनत इत्यनेन दर्शितम् ॥ ९ ॥

इत्थमुपोद्धातरूपमर्थमभिधाय प्रतिपाद्यमर्थं प्रस्तौति –

**अथ विजहारामेयं तारकमुत्साद्य गिरिमहारामे यम् ।**
**सोमः समहासेनः स्थाणुः सह नन्दिनेन्दुसमहासेन ॥ १० ॥**

अथेति । आरम्भार्थोऽथशब्दः । अथाभिधित्सितोऽर्थ आरभ्यते इत्यर्थः ।

"मङ्गलानन्तरारम्भप्रश्नकार्त्स्न्येष्वथो अथ" ।

इत्यमरः । अयं लोकशास्त्रप्रसिद्ध्यतिशयात् सर्वजनमनःपुरोवर्ती । **स्थाणुः** शिवः । **अमेयं** शौर्यादिभिरियत्तारहितम् । **तारकं** तारकाख्यमसुरम् । **उत्साद्य** निहत्य । **गिरिमहारामे** गिरौ कैलासे यो महारामः आरामवत् स्थितो वनप्रदेशः तस्मिन् । **विजहार** कृतकृत्यतया क्रीडितवान् । कैस्सहेत्यत्राह – **सोम** इति । उमा पार्वती तया सह वर्तमानः ।

"**उमा** कीर्त्यामतस्यां च गिरिजायां श्रियामपि ।"

इति **केशवः** ।

**समहासेनः** महासेनो गुहः तेन च सह वर्तमानः । **नन्दिना सह** नन्दी नन्दीश्वरः तेन सार्धम् । कीदृशेन । **इन्दुसमहासेन** धावल्यादिन्दुना समः तुल्यो हासः स्मितं यस्य स तथोक्तः । अतिवल्लभत्वात् स्वैरविहारेऽपि उमामहासेनयोस्तृतीयोऽइमासमिति मत्वा हर्षातिरेकादुत्पन्नहासेन ॥ १० ॥

ननु बालवेतालवत् लोकप्रवादमात्रसिद्ध एवायम् । वस्तुतस्तु परमेश्वर इति कश्चिन्नास्त्येव; तत्सत्त्वे प्रमाणाभावात् । सत्त्वे वा कीदृग्रूपोऽयमिति

शङ्काद्वयमेकप्रहारेणाभिहन्तुं श्लोकद्वयेन ईश्वरसत्तां साधयन् स्थाणुं वर्णयति —

**परमं धाम ध्येयं यो बिभ्रति च भ्रुवो बुधा मध्ये यम् ।**
**यं विभुमायतयोगा विचार्य जानन्त्यकृत्रिमा यतयो गाः ॥ ११ ॥**

**परम**मिति । **यः** स्थाणुः **परम**मुत्कृष्टं **धाम** तेजो भवति । नन्वस्य स्वरूपं तेजश्चेदादित्यादितेजोवत् चाक्षुष्यं स्यात् । तथा च न भवति । तत्तेजस्त्वे किं प्रमाणमित्यत्राह – **ध्येय**मिति । ध्यातव्यं ध्यानचाक्षुष्यमेवेदं तेजः, न लौकिकतेजोवन्मांसचक्षुर्ग्राह्यमित्यर्थः । अनेन स्वानुभूतिरीश्वरसद्भावे प्रमाणं, स्वरूपं तेज इत्युक्तं भवति । उक्तं च भवति —

"स्वानुभूत्येकमानाय नमश्शान्ताय तेजसे ।"

इति । ननु के ध्यातारः । कुत्र ध्यायन्तीत्यत्राह – **बिभ्रती**ति । **बुधा** निखिलविद्यापारदृश्वानो योगिनः । **यं** तेजोरूपं स्थाणुम् । **भ्रुवोर्मध्ये बिभ्रति** दधति च । दीपज्वालाकारवद् भ्रूमध्ये ध्यायन्तीत्यर्थः । अथ प्रमाणान्तरं स्वरूपान्तरं चाह – **यमिति** । चशब्दोऽनुषज्यते । **यतय**स्संन्यासिनः । **अकृत्रिमाः** अपौरुषेयाः । **गाः** वाचः, वेदान्तवाक्यानि । **विचार्य यं** स्थाणुं **विभुं** व्याप्तं अखण्डपरिपूर्णाद्वयं ब्रह्म **जानन्ति च** अवगच्छन्ति ।

"ये निर्जितेन्द्रियग्रामा यतयो यतिनश्च ते ।"

इत्य**मरः** । कीदृशा यतयः । **आयतयोगाः** आयतो दृढो **योग**श्चित्त-वृत्तिनिरोधो येषां ते, तथा श्रुतियुक्तिसहकृतयोगाभ्यासवन्तो यतयः यं ब्रह्मत्वेन साक्षात्कुर्वन्तीत्यर्थः । अनेन श्रुतिरीश्वरसद्भावे प्रमाणं, स्वरूपं च व्याप्तं ब्रह्म इत्युक्तं भवति । यं प्रभुमिति क्वचित् पाठो दृश्यते । तदा जगत्सर्गादौ समर्थं ब्रह्म जानन्तीत्यर्थः ॥ ११ ॥

अथास्य सकलं च रूपान्तरं तत्र प्रमाणमपि दर्शयन् परस्परविरुद्धाचार-त्वेन वर्णयति –

**धृतमशनाय कपालं येन च यं प्राहुरमरनायकपालम् ।**
**परिभूतो मारोपि स्वविग्रहे येन भगवतोमारोपि ॥ १२ ॥**

**धृतमिति**। अत्र प्रथमवाक्यगतश्चशब्दो वाक्यार्थसमुच्चयायोत्तरत्रानुषञ्जनीयः। **येन** स्थाणुना, **अशनाय** भोजनाय, **कपालं** शिरोऽस्थि, **धृतं चा**धारि। यस्य भिक्षा(न्न? टन) लब्धान्नपात्रं कपालोऽगमदित्यर्थः।

"**कपालो**ऽस्त्री क्वचित् स्त्री च कपालीति शिरोस्थनि।
घटादिशकले केचित्पुनः शकलमात्रके ॥"

इति **केशवः**। अनेन निष्किञ्चनत्वस्य पलाका(?) दर्शिता। **यममरनायकपालम्** अमरनायका इन्द्रादयः तान् पालयतीति तथा। 'कर्मण्यण्' (पा० सू० ३-२-१) इत्यण्। जगदीशगणमपीश्वरमित्यर्थः। **प्राहुः** कथयन्ति। बुधा इति शेषः। अनेन समृद्ध्यतिशय आवेदितः। **परिभूत** इति। 'अर्थाद्विभक्तिविपरिणाम' इति न्यायात् तृतीयान्ततया विपरिणमय्य यमित्येतत् पदमत्रानुषज्यते। अथवा उत्तरवाक्याद् येनेत्येतदत्रानुकर्षणीयम्। **येन** स्थाणुना, **मारो**ऽपि ब्रह्मादिकीटकपर्यन्तैः प्राणिभिरनिवार्यप्रसरः **कामो**ऽपि, **परिभूतश्च** तृतीयनेत्राग्निना भस्मीकृतः। **अपिशब्दः** परिभवं प्रति कामस्य कर्मीभावेऽत्यन्तासंभाव्यतां द्योतयति। वाक्यार्थसमुच्चायको वापिशब्दः। येन मारः परिभूतोऽपीत्यनेन विरागतातिशयः प्रकाशितः। **येन स्वविग्रहे** स्वशरीरार्धे, **उमा** पार्वती, **आरोपि** स्थापिता। येन प्रेमातिशयात् शरीरार्धमपि दत्तमित्यर्थः। अनेन रागातिशय उक्तः। परस्परविरुद्धधर्माणां युगपदेकाधिकरण्यमुपपादयितुं विशिनष्टि—**भगवते**ति। ऐश्वर्यादिगुणषट्कं भगम्।

"ऐश्वर्यस्य समग्रस्य वीर्यस्य यशसः श्रियः।
ज्ञानवैराग्ययोश्चैव षण्णां **भग** इतीरणा ॥"

सोऽस्यास्तीति भगवान्। (उभयथापीश्वरत्वमेव भगवत्त्वम् ?) अघटितघटयितृत्वं हीश्वरत्वात्।

"उत्पत्तिं च विनाशं च भूतानामागतिं गतिम्।
वेत्ति विद्यामविद्यां च स वाच्यो **भगवा**निति ॥"

इत्युक्तलक्षणो वा भगवान्। उभयथापीश्वरत्वमेव भगवत्त्वम्। अघटितघटयितृत्वं तत्र किमसंभाव्यमिति भावः। अनेनास्य पाणिपादादिमद्रूपान्तरं तत्सत्तायामाप्तोक्तिलक्षणं प्रमाणं चास्तीत्युक्तं भवति ॥ १२ ॥

अथ त्रयोदशभिः श्लोकैः साधितसत्ताकस्येश्वरस्यापदानं प्रकाशयन् वर्णयति-

**व्रतममलं कापालं येन धृतं यो ममर्द लङ्कापालम्।**
**यदुरसि कुम्भीनस्यः स्वपन्ति यो भेदकश्च कुम्भीनस्य ॥ १३ ॥**

**व्रतमि**ति। अत्र 'एको द्योतको बहूनामन्त्यः' इति न्यायाद् अन्त्यस्थितः चशब्दः प्रतिवाक्यमभिसंबध्यते। **येनामलं** निर्मलं, **कापालं** कपालसंबन्धि शैवागमप्रसिद्धं, **व्रत**मभङ्ग्यानुष्ठानं, **धृतं** च। **यो लङ्कापालं** रावणं, **ममर्द** च, पीडितवान्। भुजबलमदेन कैलासमुद्धृत्योत्क्षिपन्तं रावणं पर्वताधो निपात्य उपरिस्थितपर्वततया निश्चेष्टमकरोदित्यर्थः। **यदुरसि** यस्योरःस्थले, **कुम्भीनस्यः** हारादिवद् भूषणतां प्राप्ता नागस्त्रियः, **स्वपन्ति च** निद्रां कुर्वन्ति। उरःस्थलाधिकरणाया निद्रायाः स्त्रीणामौचित्यात् कुम्भीनसीनामुपादानम्। कुम्भीनसः सर्पविशेषः।

'**कुम्भीनसो** लोहिताहिः कृष्णसर्पः कुलस्थकः।'

इति **यादवः**। स च विशेषोपादानस्यानुपयोगात् सर्पसामान्यं लक्षयति। **यः कुम्भीनस्य** कुम्भीनां गजानामिनः स्वामी कुम्भीनः। गजासुर इत्यर्थः। तस्य, **भेदकश्च** प्राणहारी ॥ १३ ॥

**यस्य विलोकनदीप्ता लोका यस्यापदमरलोकनदी प्ताः।**
**योऽकृत कृत्त्या वासः कैलासे यस्य सौम्यकृत्यावासः ॥ १४ ॥**

**यस्येति**। पूर्वश्लोकाच्चशब्दोऽत्रानुषज्यते। **लोका** भूरादयः, **यस्य** स्थाणोः, **विलोकनदीप्ताश्च** विलोकनेन सर्गोन्मुखस्पन्दशक्तिमात्रपरमार्थेन ईक्षणेन, दीप्ताः प्रकाशमानाः। लब्धसत्ता इति यावत्।

'यस्याहुरीक्षणमिदं विश्वं नैगमसूक्तयः।'

इति। यद्वा विलोकनैस्तेजस्त्रयात्मकैर्नयनैर्दीप्ता भवन्ति। **अमरलोकनदी यस्य भाः** जटाः **आपच्च** प्राप्तवती। अयमर्थः— भगीरथप्रार्थनया स्वर्लोकाद् भूलोकमवतरन्ती गङ्गा स्वप्रवाहप्रपातधारणसामर्थ्यवतोऽन्यस्याभावात् तद्धारणे शक्तिमतो यस्य मूर्धनि पपातेति। यः **कृत्त्या** करिणो व्याघ्रस्य वा चर्मणा, **वासः** वस्त्रं, **अकृत** कृतवान्। **यस्य** कैलासे कैलासाख्ये गिरौ, **आवासश्च** निवासो भवति। तत्र हेतुः **सौख्यकृतीति**। सुखमेव सौख्यम्। चातुर्वर्ण्यादित्वात् ष्यञ्। यद्वा सुखयतीति सुखः। पचाद्यच्। तस्य भावः सौख्यम्, तत्करोतीति सौख्यकृत्॥ १४॥

**योऽवति गामपि नाकं यस्य करग्राह्यतां जगाम पिनाकम्।**
**यः ख्यातः परशौचः श्मशाननिलयोऽपि यो रतः परशौ च॥ १५॥**

य इति। अपिरनुक्तसमुच्चयार्थः। **यः** स्थाणुः, **नाकं** स्वर्गं, **गां** भूमिं, अपिशब्दाद् अन्तरिक्षं च। **अवति** रक्षति। **पिनाकं** पिनाकाख्यं धनुः। **यस्य करग्राह्यतां** त्रिलोकरक्षायै करेण उपादेयतां, **जगाम** च गतवत्।

"**पिनाकः** श्रीमहादेवचापे शूलाह्वयायुधे।
रजोवर्षे च दण्डे च"

इति **केशवः**। **यः श्मशाननिलयः** श्मशानं पितृवनं तदेव निलयो वासस्थानं यस्य स तथा। श्मशानवास्यपि **परशौचः** अत्यन्तशुद्धः। **ख्यातश्च** लोके वेदे च प्रसिद्धः। लोके हि कश्चित् श्मशानवासी चेदशुद्ध एव भवति। अयन्तु प्रत्युत श्मशानवासित्वेऽपि नित्यशुद्ध एव। अनेनास्य लोकोत्तरस्वभावतोक्ता। **यः परशौ** कुठारे दैत्यशिरच्छेदनसाधकतमे, **रतश्च** रक्तो भवति॥ १५॥

**यस्य च वैकुण्ठेषु स्नेहो यस्यारिराहवे कुण्ठेषुः।**
**गलितोच्चारावेण स्फुटमटतो यस्य दोष्णि चारावेणः॥ १६॥**

**यस्येति । यस्य वैकुण्ठेषु** द्रोणपुष्पेषु, **स्नेहश्च** आत्मानमलंकर्तुं प्रीतिर्भवति । **यस्यारिः** शत्रुः, **आहवे** युद्धे, **कुण्ठेषुश्च** कुण्ठः शरव्यभेदाक्षम इषुर्यस्य स तथा । आयुधान्तरोपलक्षणमिषुग्रहणम् । कुण्ठायुध इत्यर्थः । **यस्य चारौ** दुष्टनिग्रहकरत्वात् सुन्दरे, **दोष्णि** भुजाग्रे, **एणश्च** मृगो, विद्यते । कीदृशस्य । **उच्चारावेण** भगवद्वहनता-(ज्ञा?जा)तगर्वतया उच्चैस्तरः आरावः हुम्भानादो यस्य तादृशेन, **गलिना** वृषेण, **स्फुटं** यथा भवति तथा **अटतः** गच्छतः ॥ १६ ॥

**यं वा काली नमति स्कन्दोंऽशो यस्य योऽम्बिकालीनमतिः ।**
**यश्च विनायकतातः प्रमथा येनोद्धृता विनायकतातः ॥ ॥ १७ ॥**

यमिति । वाशब्दः समुच्चये । **यं** स्थाणुं, **काली** भद्रकाली, **नमति वा** नमस्करोति । **स्कन्दो** गुहो, **यस्यांशो** वा पुत्रतया स्थितः एकदेशः । **यः** स्थाणुः, **अम्बिकालीन-मतिः** वा अम्बिकायां पार्वत्यां सक्तचितः । **यो विनायकतातश्च** विनायकस्य गणपतेः पिता भवति । **येन प्रमथा** भूतगणाः, **विनायकतातः** विगतो नायकः स्वामी येभ्यस्ते विनायकाः, तेषां भावो विनायकता, तस्या भयहेतोः, **उद्धृताश्च** रक्षिता अभवन् । स्वेन नाथवन्तः कृता इत्यर्थः । यः भृत्यकलत्रपुत्रपरिवृतो लौकिकीं वृत्ति-मनुवर्तत इत्यर्थः ॥ १७ ॥

**यत्समवेता लाल्या जगतैव गणा युताश्च वेतालाल्या ।**
**उच्चा नीचा मुण्डीभूताः प्रेताश्च डाकिनी चामुण्डी ॥ १८ ॥**

**यत्समवेता** इति । एवकारो भिन्नक्रमोऽन्ययोगं व्यवच्छिनत्ति । गणाः श्रीभूत-गणाश्च, **प्रेताः** गणविशेषाः, **डाकिनी चामुण्डी च यत्समवेता एव** येन स्थाणुना समवेताः परिवारतया संबद्धा एव **जगता** जगद्वासिना जनेन **लाल्या** अभिनन्द-नीयाः । वन्द्या इति यावत् । भवन्तीति शेषः । अत्र डाकिनी चामुण्डीति जातिपरो निर्देशः । डाकिन्यश्चामुण्डाश्च इत्यर्थः । तामसजातित्वान्निकृष्टा अपि भूतप्रेतादयः

यत्संबन्धाद्धन्या भवन्तीत्यर्थः। गणं विशिनष्टि-युता इति। वेतालाद्या वेताला नाम पिशाचविशेषाः। तेषामाल्या समूहेन। च शब्दादनुक्तैः कूश्माण्डादिभिश्च युता। वेतालालिरपि यत्सम्बन्धे॥ यत्सम्बन्धाद्धन्या भवन्तीत्यर्थः। तथा उच्चाः गगनतलपर्यन्तदीर्घाः। नीचाः वामनाः। मुण्डो मूताः कृत्तशिरोवचनाः। विकृताननाकारा इत्यर्थः। यत्सम्बन्धाद् हीनानामपि उत्कर्षः तस्योत्कर्षः (किं) कथ्यतामिति भावः॥ १८॥

शिवभक्तः श्वेतो नाम कश्चिद् ब्राह्मणो बभूव। तं मृत्युना ग्रस्यमानं भीतं शरणार्थिनम् आलोक्य परमकारुणिको भगवान् मृत्युं हत्वा तं रक्षितवानिति पौराणिकी प्रसिद्धिः। तदेतदाह —

**येन सशङ्कालस्यः श्वेतो जुगुपे गतो वशं कालस्य।**
**सोऽपि रयादक्षेपि प्रकटफला यन्निराक्रिया दक्षेऽपि॥ १९॥**

**येनेति।** **येन** स्थाणुना, **श्वेतो जुगुपे** रक्षितः। कीदृशः। **सशङ्कालस्यः** शङ्का भयं तज्जनितं वैवश्यमालस्यं तेन सह वर्तमानस्तथा। तत्र हेतुः-**गतो वशं कालस्येति**। कालस्य मृत्योर्वशं विधेयतां प्राप्तः। किञ्च स्वभक्तपरिबुभूषालक्षणापराधी कालोऽपि येन स्थाणुना, **रयाद्** झटिति, **अक्षेपि** निरस्तः। निगृहीत इति यावत्। भगवन्निराकरणे कस्यापि न सौख्यमित्याह – **प्रकटेति**। **यन्निराक्रिया** यस्य निराक्रिया यज्ञभागाप्रदानादिलक्षणा निन्दा, **दक्षेऽपि** निखिलजगद्वन्द्ये दक्षप्रजापतावपि, **प्रकटफला**, किं पुनरन्येषु। प्रकटं प्रत्यक्षीभूतं फलं कार्यं यस्याः सा तथा।

" फलं फाले धने वीर्यें निष्पत्तौ भागलाभयोः।
सस्ये हेतुकृते चर्मसंज्ञशस्त्रनिवारणे॥
शस्त्राणां च मुखे "

इति केशवः॥ १९॥

**येन रिपूष्णोदन्तस्फुटयशसोत्पाट्यते स्म पूष्णो दन्तः ।**
**द्युसदामध्यक्षेऽपि क्रुध्यत्यात्मा यतोऽलमध्यक्षेपि ॥ २० ॥**

**येने**ति । **अपि**शब्दो भिन्नक्रमः समुच्चये । **येन पूष्णः** पूषाख्यस्य देवस्य, **दन्तो** दशनः । जातावेकवचनं, दन्ता इत्यर्थः । **उत्पाट्यते स्म** उत्पाटितः । कीदृशेन । **रिपूष्णोदन्तस्फुटयशसा** रिपूणामुष्णेनासह्येन उदन्तेन वृत्तान्तेन पराक्रमलक्षणेन स्फुटं निर्विवादं यशो यस्य स तथा। तथाविधो नाम (परि)भवं न सहते इति भावः । कस्मात् पूष्णो दन्तानुत्पाटितवानित्यत्राह — द्युसदामिति । **सदां** देवानाम् **अध्यक्षे** स्वामिनि इन्द्रे **क्रुध्यति** दक्षाध्वरध्वंसात् कुप्यति सति, **आत्मा** शिवः, स्वयं **अलमत्यर्थमध्यक्षेपि** निरस्तः । **यतः** यस्मात् तस्मादुत्पाटितवान् । पूषा हि दन्तान् दर्शयित्वा हसितवान् इत्येवं पुराणेषु दृश्यते, न त्वधिक्षिप्तवानिति । अतोऽत्राधिक्षेपः सदन्तदर्शनो हास एव । हासस्यापि निन्दागर्भत्वेनाधिक्षेपतुल्यत्वात् । भगवन्निराकरणस्य फलं पूषण्यपि प्रत्यक्षमित्यर्थः ॥ २० ॥

**यस्य च विलसन्नेत्रच्छादनतो जगति तिमिरविलसन्नेऽत्र ।**
**लोचनमासीदच्छं लालाटं येन भुवनमासीदच्छम् ॥ २१ ॥**

**यस्ये**ति । **यस्य** स्थाणोः, **विलसन्नेत्रच्छादनतः** उपपत्तिबलात् नवोढया पार्वत्या सुरतसमये व्रीलया विलसतोः दीप्यमानयोः लोचनयोः विलोचनयोः, छादनतः पिधानाद्धेतोः । **अत्र** एतस्मिन्, **जगति**, तिमिरविलसन्ने तिमिरावृतत्वेन विलान्तर्गत इवाप्रकाशीभवतीत्यर्थः । **लालाटं** ललाटे निटिले भवम्, **अच्छम**स्यात्मकत्वादुज्ज्वल्यमानं, **लोचनं** नेत्रमासीच्च उत्पन्नमभूत् । तेन लोकः प्राकाश्यमापेत्याह — **येने**ति । लालाटलोचनेन हेतुना **भुवनं** कर्तृ, शं सुखं, प्रकाशीभावात्मकम्, **आसीदत्** प्रापवत् । अनेन त्रिलोचनत्वात् लोचनानां च तेजस्त्रयत्वाच्चास्य लोकातिशायित्वमुक्तम् ॥ २१ ॥

**अतिभीमं वरतोयं महता वेगेन गलितमम्बरतो यम् ।**
**भङ्गं नेतुं गाङ्गं न शशाक स्थितं वने तुङ्गाङ्गम् ॥ २२ ॥**

**अतिभीम**मिति । **अम्बरतः** आकाशात् , **महता** अतिशयेन **वेगेन** । प्रकृत्यादित्वात् तृतीया । **गलितं** पतितं, अत **एवातिभीमं** भयङ्करं, **गाङ्गं** गङ्गासम्बन्धि, **वरतोयं** वरमुत्कृष्टम् , स्वरूपतो महदित्यर्थः न तु पावनमिति । तस्यात्रानुपयोगात् । **तोयं** जलं, **यं** स्थाणुं, **भङ्गं** बाधां, **नेतुं न शशाक** । गङ्गाप्रवाहोऽपि यं स्वप्रपातधारणसामर्थ्ये नेतुमशक्तोऽभूदित्यर्थः । तत्र हेतुः- **तुङ्गाङ्ग**मिति । तुङ्गानि उन्नतानि अङ्गानि शरीरावयवा(नि ? वाः)यस्य स तथा ।

' अङ्गं शरीरावयवे शिरापायनयोर्गुणे । '

इति **केशवः** । महाशरीरमित्यर्थः । अम्बरत इत्यवधिनिर्देशः पतनस्य दूरीभावेनात्यन्तासह्यतां द्योतयति । स्थाणुं विशिनष्टि—**वने स्थित**मिति । **वने**ऽरण्ये **स्थितं**, न तु तत्प्रवाहधारणक्षमे प्रदेशे स्थितमिति भावः । ननु "यस्यापदमरनदी मा:" इत्यनेन पूर्वमेव गङ्गाधरत्वमुक्तम् । इदानीमपि भङ्ग्यन्तरेण तदेवोच्यते । अतोऽत्र पौनरुक्त्यं महान् दोषः स्यात् । उच्यते – पूर्वं भगवति गङ्गायाः प्राप्तिर्विहिता । इदानीन्तु प्राप्तिन ( नृ )द्य तस्या भगवद्भ(ङ्ग्याधारे न ? ङ्गाधाने) सामर्थ्याभावो विधीयते इति न पौनरुक्त्यम् ॥ २२ ॥

**पदयोरपाशु पतन्नरतं यस्यार्जुनः पुरा पाशुपतम् ।**
**नष्टभये नाकारिग्रामे नाशः क्षणेन येनाकारि ॥ २३ ॥**

**पदयो**रिति । अपिशब्दोऽत्राध्याहर्तव्यः । **पुरा** पूर्व**मर्जुनो**ऽपि भूभारसञ्जिहीर्षया नरनारायणयोर्नृरूपेण स्थितस्य विष्णोरंशः पार्थोऽपि, **यस्य** स्थाणोः **पदयोः पतन्** '(लक्षण)हेत्वोः क्रियायाः'(पा० सू० ३-२-१२६) इति हेतौ शता । दुश्चरतपश्चर्यया भगवन्तं प्रसादयन्नित्यर्थः । **आशु** अविलम्बितं यथा भवति तथा, **पाशुपतं** पशुपतिर्देवता

यस्येति पाशुपतम् । 'सास्य देवता' (पा० सू० ४–२–२४) इत्यण् । पाशुपतसंज्ञम् **अस्त्रम्, आप** लब्धवान् । आश्विति क्रियाविशेषणम् । 'कृवापाजि' (उ० सू० १) इत्यादिनोण्प्रत्ययः । तदन्तात् प्रथमैकवचनम् । तस्य 'क्रियाविशेषणानां च' इति नपुंसकत्वात् 'स्वमोर्नपुंसकात्' (पा० सू० ७-१-२३) इति लुक् । ननु क्रियाविशेषणाद् द्वितीयैकवचनमिति केचित् । प्रथमैकवचनमित्यन्ये । कथमुभयोरुपपत्तिः? उच्यते–क्रिया हि साध्यमानत्वात् कर्मकारकं भवति । तदा मृदु पचतीत्यादौ मृदु कृत्वा पचतीत्यादिरर्थः स्यात् । ततः क्रियायाः (कर्तृत्वात् ? कर्मत्वात्) तद्विशेषणात् द्वितीयैकवचनं भवति । तथोत्पद्यमानत्वात् कर्तृकारकमपि भवति । तदा मृदु यथा भवति तथा पचतीत्यादिरर्थः स्यात् । ततः क्रियायाः कर्तृत्वात् तद्विशेषणात् प्रथमैकवचनं भवति इत्युभयमप्युपपद्यते । उक्तं च **भोजेन**–"न च क्रियाविशेषणानां कर्मतैवेति नियमः । क्रिया हि यथा साध्यमानत्वात् कर्म तथा उत्पद्यमानत्वात् कर्तापि भवति । ततश्चोभयथापि क्रियाविशेषणानि योज्यन्ते" इति । अस्त्रावाप्तिः फल्गुनी चक्रीमेत्याह-**नष्टभय** इति । **अस्त्रेण** करणेन **नाकारिव्राते** नाकारीणां दैत्यानां निवातकवचाख्यानां, व्राते समूहे । **क्षणेन** झटित्येव **नाशोऽकारि** । अर्जुनेनेति शेषः । नन्वस्त्रान्तरेषु विद्यमानेषु कुतः पाशुपतास्त्रं प्रयुक्तवानित्यत्राह–**नष्टभय** इति । नष्टं भयमस्त्रान्तरेभ्यो भीतिर्यस्य स तथा । जगत्प्रभोर्विष्णोरप्यंशा अर्जुनादयोऽपि यत्प्रसादलाभादेव जगद्रक्षापटवो भवन्तीति भावः ॥ २३ ॥

आस्तामर्जुनादयोंऽशाः अंशी विष्णुः स्वयमपि स्वाधिकारानुष्ठानमौक्याय स्थाणुं प्रसादयामासेत्याह —

**अर्चां रचयांचक्रे स्वचक्षुषा पूर्णपुष्करचयां चक्रे ।**
**अतिगृध्नुमना यस्य स्वयं हरिः कर्तुमरिवधमनायस्य ॥ २४ ॥**

**अर्चा**मिति । अपिशब्दोऽत्रार्थादाक्षिप्यते । **हरि**र्विष्णुः, **स्वयमपि यस्य** स्थाणोरर्चां पूजां **रचयांचक्रे** कृतवान् । किमभिसन्धायार्चितवानित्यत्राह - **चक्रे** इति ।

सुदर्शनाख्यं यच्चक्रं तच्छिवसंबन्धि पूर्वमभूत्। तस्मिंश्चक्रे **अतिगृध्नुमनाः** अतिगृध्नु अत्यर्थं काङ्क्षणशीलं मनो यस्य स तथा। शिवाच्चक्रादानाभिसन्धित्सुरित्यर्थः। किमर्थमस्य चक्रादित्सा इत्यत्राह - **कर्तु**मिति। **अनायस्य** आयासं क्लेशमकृत्वा। **अरिवधं** शत्रुनिग्रहं **कर्तुम्**। पुरा शिवप्रसादनाय तपश्चरन् हरिः प्रतिदिनं नियमितसंख्यैः पद्मैः शिवार्चनरूपं व्रतमतिष्ठत्। शिवः तस्य नियमस्थैर्यपरीक्षार्थं अर्चनसमये पद्ममेकं तिरश्चकार। ततो हरिः तत्सङ्ख्यापरिपूरणाय स्वीयं नेत्रमुत्पाट्यार्चितवान् इति या पौराणिकी प्रसिद्धिः तामनुसृत्यार्चां विशिनष्टि - **स्वचक्षुषा** इति। स्वस्यात्मनः विष्णोश्चक्षुषा ऊनसङ्ख्यापूरणार्थमुत्पाटितेन नेत्रेण, **पूर्णपुष्करचयां** पूर्णः पुष्कराणां पद्मानां चयस्समूहः यस्यां सा तथा।

" पुष्करं करिहस्ताग्रे जले वाद्यमुखे युधि।
खेऽब्जे दिव्यसुरायां च तीर्थभेषजभेदयोः॥
पटहे मुरवे त्वन्ये पुमांस्तीर्थे च मारुते।
शेषे च शोभने तु स्यात् मेढ्रलिङ्गमिति स्मरेत्॥"

इति **केशवः**॥ २४॥

पुरा खलु जगदीशम्मन्यतया परस्परं विवदमानौ हरिविरिञ्चावभूताम्। ततस्तद्गर्वनिर्वापणाय तयोः पुरस्तादद्दष्टोभयकोटिकं ज्योतिर्लिङ्गं प्रादुरभूत्। ततश्चैतदन्तं यो द्रक्ष्यति स जगदीशो भवत्विति समयं कृत्वा तदन्तदिदृक्षया हरिरधस्तात् विरिञ्च उपरिष्टाच्च द्राघीयसा कालेन दवीयांसम् अध्वानं गत्वापि तदन्तमपश्यन्तौ यथागतं प्रत्यागताविति पुराणप्रसिद्धिमनुसृत्य भगवन्महिमानमुद्घाटयति —

**सत्वरगत्या यस्य ब्रह्मोर्ध्वं हरिरधो जगत्यायस्य।**
**अविजानानावादौ विनिवृत्तावन्तमात्तनानावादौ॥ २५॥**

**आदौ** प्रथमसर्गे, **ब्रह्मा** विरिञ्चः, **जगति ऊर्ध्वं** उपरिष्टात्, **हरिः** विष्णुः, **अधः** अधस्तात्। **सत्वरगत्या** सत्वरया सवेगया, गत्या गमनेन हेतुना, **आयस्य** यत्नं

कृत्वा, **यस्य** स्थाणोः ज्योतिर्लिङ्गात्मना स्थितस्य **अन्तमभिजानानौ** अपश्यन्तौ, **विनिवृत्तौ** यथागतं प्रत्यागतवन्तौ । अत्रोभयोरपि अन्योन्यस्मात् पूर्वमेवैतदन्तदिदृक्षया गतेः सत्वरमित्यवगन्तव्यम् । **आत्तनानात्वाववि**ति तात्कालिकं विशेषणम् । शिवोत्कर्षदर्शनादागतोऽङ्गीकृतो नानाविधो लौकिकवैदिकादिभेदा(द)नेकप्रकारः शिवस्तुतिरूपो वादो वागिन्द्रियवृत्तियाभ्यां तौ तथोक्तौ ॥ २५ ॥

इत्थमभिधित्सितवस्तु नायकं भगवन्तमुपवर्ण्येदानीं प्रतिनायकवृत्तिप्रदर्शनाय प्राप्तोऽवसर इति तदुत्पत्तिमाह —

**अथ गतिमापुष्यन्तस्त्रयोऽत्र भगवत्यघौघमापुष्यन्तः ।**
**अचिरादासन्नसुराः कुर्वाणा दश दिशः सन्नसुराः ॥ २६ ॥**

अथेति । प्रकृतादर्थादर्थान्तरारम्भार्थोऽथशब्दः । अथ इदानीमर्थान्तरमारभ्यत इत्यर्थः । **अत्र** उक्तगुणविशिष्टेऽस्मिन् भगवति स्थाणौ, **अन्तः** मनसि, **गतिं** कार्यान्तरचिन्ताभावात् स्वैरविहारम्, **आपुषि** प्राप्ते सति, **अचिरात्** तारकवधात् परमविलम्बेन, **त्रयः** त्रिसङ्ख्याकाः, **असुरा आसन्** अभूवन् । कीदृशाः । **अघौघम्** अघानां पापानामोघं सञ्चयम् **आपुष्यन्तः** प्राप्नुवन्तः । **कुर्वाणा** इति यावत् । सदा पापमेव चरन्त इत्यर्थः । असुरान् विशिंषन् तैर्देवाः पराजिता इत्याह — **कुर्वाणा** इति । तदा तस्मिन् काले, **दश दिशः** आशाः, **सन्नसुराः कुर्वाणाः** सन्नाः सुराः यासु तास्तथा । असुराभिभूतैः स्वर्गमपि त्यक्त्वा पलायमानैर्देवैरधिष्ठितत्वाद्दिशां सन्नसुरत्वम् ॥ २६ ॥

अथ जगदुपद्रवकरणे तेषां स्वाभाविकीं शक्तिसम्पदं दर्शयन् तान् विशिनष्टि —

**शूराः परमध्ये ये भक्ताः परमेश्वरे च परमध्येये ।**
**ये समपाता रोगास्त्रय इव तारकभुवो नपातारो गाः ॥ २७ ॥**

**शूरा** इति। येऽसुराः, **परमध्ये** परेषां शत्रूणां मध्ये, **शूरा** निर्भयाः। **परमेश्वरे भक्ताश्च**। कीदृशे। **परमध्येये** परमैरुत्कृष्टैर्जनैः ध्येये ध्यातुं योग्ये। न तु यस्यां कस्याञ्चित् तामस्यां मूर्तौ भक्ता इति भावः। अनेन तत्तदिष्टफलप्राप्तौ सुलभता द्योत्यते। दैव-पुरुषकारसम्पन्नानां किमशक्यमिति भावः। **ये च त्रयो रोगाः** रोगहेतवो वातपित्तश्लेष्मा-ख्या, **इव समपाताः** तुल्यगतयः। (त? य)था वातपित्तश्लेष्मस्वन्यस्मिन् विकृते अन्यावपि विकुरुतः तथैषामन्य(तर?)स्मिन् किञ्चित्कालप्रति(? थप्र)वृत्तेऽन्यावपि तत्सहकारिणावित्यर्थः। उपमया चैकतत्वस्याव्यभिचारो द्योत्यते। शौर्यादिगुणयोगाद् एकैकस्यारब्धकार्यनिर्वाह-क्षमत्वे सति अन्योन्यमङ्कुनानां किं नामाशक्यमिति भावः। **ये च तारकसुताः** तारकात् तारकाख्यादसुरात् भवन्तीति। अथ अनेनामुष्यायणत्वकथनेन सहजायाश्शौर्यादिगुण-सम्पत्तेः उत्कर्षो द्योत्यते। ईदृश्या शक्तिसम्पदा कुत्रोपक्रियते इत्यत्राह - **नपातार** इति। सुप्सुपेति समासादेकं पदम्। उक्तं च **वामनेन** "एकशब्दम्सुप्सुपेति समासात्" (का० सू० ५, २, १२) इति। गोशब्देन वाक् स्वर्गो भूमिश्च उच्यन्ते। अत एव बहुवचनप्रयोगः। वाक् चात्र वेदलक्षणा। ये च गाः वाचः वेदलक्षणाः स्वर्गं भूमिं च नपातारः अरक्षणशीलाः। पीडयितार इत्यर्थः। नपातार इति तृन्नन्तं रूपम्। वेदबाधितत्वं तच्चोदितकर्मबाधकत्वात्, अत एव हविर्भोगाभावात् स्वर्गस्य बाधकत्वं, हवि-र्भोगाभावादेव वृष्ट्यभावेनान्नाभावाद् भूमेरपि बाधकत्वमित्यवगन्तव्यम्। स्वर्गस्य तु युद्ध-वेलायामुपमर्दितत्वाद् विशिष्य बाधकत्वमुपपद्यते। लोकपीडायामेवैतच्छक्तेरुपकार इति भावः॥ २७॥

अथ ते जगत्पीडाविधौ स्वाभाविक्या शक्त्यैवालम्प्रत्ययमलभमानाः पुनरपि आधिकां शक्तिमाधातुमुपक्रान्ता इत्याह —

**वृत्तौ राजस्यां ते धृतमनसः पर्वताधिराजस्यान्ते।**
**धृतरभसं तापस्यव्रतमधुरुदयाय भुवनसन्तापस्य॥ २८॥**

**वृत्ताविति**। **ते** प्रस्तुता असुराः **पर्वताधिराजस्य** हिमवतः। **अन्ते** अवसाने, अधित्यकायामित्यर्थः। **तापस्यव्रतं** तापसेभ्यो हितं (पं)चाग्निमध्यस्थित्यादिकं व्रतमभङ्ग्या-

नुष्ठानम्, **अधुः** धृतवन्तः । **धृतरभसमिति** क्रियाविशेषणम् । धृतो रभसो वेगो यथा तथेति । स्वोत्पत्तिसमनन्तरमेव तपश्चेरुरित्यर्थः ।

" रभसस्तु पुमान् वेगे हर्षसंरम्भयोरपि ।
त्रि तु स्यान्महति द्वे तु म्लेच्छ "

इति **केशवः** । किमर्थं तपश्चक्रुरित्यत्राह – **उदयायेति** । **भुवनसन्तापस्य** भुवनस्य भुवनवासिनो जनस्य यः सन्तापः पीडा तस्योदयाय उत्पत्तये । लोकपीडासामर्थ्यलाभार्थमित्यर्थः । कथं ते पापे कर्मणि प्रवृत्ता इति शङ्कां शकलयितुं तान् विशिनष्टि – **वृत्ताविति** । **राजस्यां** रजोगुणमय्यां, **वृत्तौ** वर्तमाने, **धृतमनसः** कृतबुद्धयः । राजस्यामित्येतत् तामस्यामप्युपलक्षणम् । राजसतामसस्वभावा इत्यर्थः । तादृशां हि पाप एव प्रवृत्तिस्संभविनीति भावः ॥ २८ ॥

अथैषामुपासनाविषयो ब्रह्मा; ते प्रसन्नं च तं स्वाभिमतं प्रार्थयामासुरित्याह –

**तैः कामो देवारिप्रवरैर्धातुस्सति प्रमोदेऽवारि ।**
**शक्त्याज गतावध्या स्याम वयं सामरेण जगतावध्याः ॥ २९ ॥**

**तैरिति** । **तैः** व्रतमनुतिष्ठद्भिः, **देवारिप्रवरैः** असुरैः, **धातुः** ब्रह्मणः, **प्रमोदे** हर्षे, **सति** विद्यमाने । कारणभूतेन प्रमोदेन कार्यभूतः प्रत्यक्षीभावो लक्ष्यते । प्रत्यक्षतायां सत्यामित्यर्थः । **कामोऽ**भिमतोऽर्थः, **अवारि** वृतः । धातुरित्यनुवादः तेषामुपासनाविषयो धातैवेति विधिं प्रत्याययति । वरणप्रकारमाह – **शक्त्येति** । **अज**, हे ब्रह्मन्, **वयं गतावध्या** गतोऽपगतोऽवधिः सीमा यस्याः तया, **शक्त्या**स्मत्संबन्धिन्या हेतुना, **सामरेण** अमरैस्सहितेन, **जगता** जगद्वासिना जनेन, **अवध्या** हन्तुमशक्याः, **स्याम** । प्रार्थनायां लिङ् । अमराणां जगदन्तर्भावेऽपि पृथगुपादानं प्राधान्यख्यापनार्थम् । ब्राह्मणा आयाताः वसिष्ठोऽप्यायातः इतिवत् । स्वेषां लोकोत्तरशक्तिमत्त्वं केनचिदप्यवध्यत्वं च वरयामासुरित्यर्थः ॥ २९ ॥

ततो ब्रह्मणा किं प्रतिपन्नमित्यत्राह –

**स विधातेत्यर्थनतः तान् प्रत्यूचे जगद्धितेऽत्यर्थनतः।**
**दुर्लभमन्यङ्का मन्निर्मरणत्वं लभध्वमन्यं कामम् ॥ ३० ॥**

**स** इति। **सोऽसुरैः** प्रार्थितो, **विधाता** ब्रह्मा, **इति** उक्तप्रकारेण, **अर्थनतो**ऽसुरकृतात् प्रार्थनाद्धेतोः, **तान् प्रति** असुरानुद्दिश्य, **ऊचे** उक्तवान्। "अभितः परितः" (पा० सू० वा० २-४-४८) इत्यादिना प्रतियोगे द्वितीया। कीदृशः। **जगद्धिते** जगते जगद्वासिने जनाय यद्धितं श्रेयः तस्मिन्, **अत्यर्थं नतः** अत्यन्तं रतः। एतत् प्रार्थिताप्रदाने हेतुः। उक्तिप्रकारं दर्शयति- **दुर्लभमिति। अन्यङ्का** न्यङ्को दोषः, अविद्यमानो न्यङ्को येषां तेषां सम्बोधनं। तथा। "युष्मदर्थसारा संबुद्धिः" इति न्यायात् युष्माकमिति सेत्स्यति। युष्माकं, (**मत्**) मत्तो, **निर्मरणत्वं** मृतिरहितत्वं, **दुर्लभं** लब्धुमशक्यम्। जगदवध्यत्वे दत्तेऽन्तकस्यापि जगदन्तर्भावात् तदवध्यत्वमपि दत्तं भवति। एतच्चाशक्यमेव। देहारम्भकर्मक्षये देहपातस्यावश्यम्भावादिति भावः। अत एवोक्तं निर्मरणत्वं दुर्लभमिति। एतदप्रदाने हेतुरशक्यत्वमेव न तु युष्माकं योग्यत्वाभाव इति द्योतयितुं अन्यङ्का इत्यामन्त्रणम्। इदमेकमेव ममाप्रदेयम् अन्यत् सर्वं देयमेवेत्याह – **लभध्वमिति। अन्यं** निर्मरणत्वव्यतिरिक्तं, **कामम्** अभिमतं वस्तु, **लभध्वं** वृणुध्वमित्यर्थः ॥ ३० ॥

अथ ते भङ्ग्यन्तरेण जगदवध्यत्वमेव वव्रुरिति श्लोकद्वयेनाह —

**निरतैर्जगदे कलये तैरित्युक्तैर्विचार्य जगदेकलये।**
**जगदधिप स्मेमहि ते पुरत्रये यदि कृपास्ति परमे महिते ॥ ३१ ॥**

**निरतैरिति। इति** उक्तप्रकारेण, **उक्तैः** ब्रह्मणा कथितैः, **तैः** असुरैः, **विचार्य** मिलित्वा निरूप्य, **जगदे** गदितम्।

" धातोरर्थान्तरे वृत्तेर्धात्वर्थेनोपसंग्रहात्।
प्रसिद्धेरविवक्ष्यत्वं* कर्मणोऽकर्मिका क्रिया " ॥

---

* 'प्रसिद्धे रविवक्षातः' इति धातुवृत्त्यादिपाठः।

इति वचनात् भावे लिट् । कस्मै प्रयोजनायेत्यत्राह - **कलय** इति । **कलये** अनर्थाय । मरणायेति यावत् । स्वेषामिति शेषः । फलितार्थकथनमेतत् ।

"कलिर्विभीतके तस्य फलेऽनर्थे च संयुगे ।
कलिर्हि श्रीरिति प्राह शब्दविच्छाकटायनः ॥
विवाहमात्रे त्वजयः कलिशब्दमभाषत ।
युगे चतुर्थे चालक्ष्म्याम्"

इति **केशवः** । तेषामभिसन्धिस्तु अन्यथेति व्याख्यायितुं तान् विशिनष्टि–निरतैरिति । **जगदेकलये** जगतः एकस्मिन् केवले लये नाशे, **निरतैः** जगन्नाश एकस्मिन्नेव बद्धमनस्कैरित्यर्थः ।

"एकशब्दस्तु धीमद्भिः समाम्नातश्च केवले ।
प्रधाने प्रथमेऽन्यस्मिन् समानेऽल्पेऽप्यसौ पुनः ॥
एकत्वसंख्यायुक्ते स्यात् संख्येये तत्र चाप्यसौ ।
नित्यैकवचनान्तः स्यादिति प्राहुः"

इति **केशवः** । उक्तिप्रकारं दर्शयति–**जगदधिपे**ति । **जगदधिप**! हे जगत्स्वामिन्! **ते** तव, **कृपा** दया, **अस्ति यदि** विद्यते चेत् । अस्मास्विति शेषः । तर्हि **वयं पुरत्रये** पुराणां त्रितये, **रमेमहि** विहरेम । प्रार्थनायां लिङ् । तव करुणा चेदस्माकम् एकैकं पुरमनुगृहाणेत्यर्थः । कीदृशे पुरत्रये । परमे उत्कृष्टे, अतएव **महिते** पूजिते । पुरान्तरेभ्यो विशिष्टे इत्यर्थः ॥ ३१ ॥

तत्रोक्तं परमत्वं विवृण्वानाः कमपि विशेषं प्रार्थयन्ते –

**पृथगहितावध्यं ते जगति चरित्राब्ददशशतावध्यन्ते ।**
**सुरसत्तम नो निलया गत्या घटनाभियुर्जितमनोनिलया ॥ ३२ ॥**

**पृथगिति**। हे **सुरसत्तम**, हे देवश्रेष्ठ, **नः** अस्माकं **ते** भवदनुग्रहविषयत्वेन प्रकृताः **निलयाः**, पुराणि, **जगति अहितावध्यं** अहितैः शत्रुभिरवध्यमनिग्राह्यं यथा भवति तथा,**पृथक्** असंभूय, **चरित्वा** इतस्ततो गत्वा, **अब्ददशशतावध्यन्ते** अब्दानां संवत्सराणां दशशतानि सहस्रं तान्येवावधिः सीमा तस्यान्तेऽवसाने । संवत्सराणां सहस्रे पूर्णे इत्यर्थः । **जितमनोनिलया** लोके मनोनिलौ हि वेगातिशये प्रसिद्धौ, तावपि जितौ परिभूतौ यया तया, **गत्या** गमनक्रियया, **घटनां** सङ्गतिम् , **इयुः** प्राप्नुयुः। एतदुक्तं भवति- सहस्रसंवत्सरान् शत्रुभिरपरिभाव्या भूत्वा जगति पृथक् पृथक् चरितानामस्मन्निलयानां संवत्सरसहस्रसंख्यापू(र?रके) समये वेगितया गत्या सङ्गतिरस्त्विति। वेगितगत्या संयोगे तदैव वियोगोऽवश्यम्भावीति सङ्गतिमेव वृतवन्तः ॥ ३२ ॥

अथैते ब्रह्मणो मुखान्निर्भरणत्वस्यालभ्यताश्रवणात् स्वेषां वध्यत्वमङ्गीकुर्वाणास्तत्र कालस्य च साधनस्य, कर्तव्यस्य च कर्तुश्च नियमं प्रार्थयन्ते —

स च हन्तेह न नेन स्यादस्माकं यतिष्यते हनने नः ।
ताश्च भिदामानीय स्वयमेकेनेषुणा तदा मानी यः ॥ ३३ ॥

**स चेति**। चौ वाक्यार्थसमुच्चये। **इन** हे स्वामिन् , **इह** अस्मिंल्लोके, **नो**ऽस्माकं, **हन्ता** वधकर्ता **न न स्याच्च**। द्वयोर्नञोः प्रकृतार्थावधारकत्वात् स्यादेवेत्यर्थः । स इत्युक्तम् । कोऽसावित्यत्राह – **यतिष्यत** इति। **यो मानी** अभिमानवान् अस्मत्प्रसरणा-सहिष्णुरित्यर्थः । **स्वयं** सहायानपेक्षः, **तदा** यस्मिन् काले पुर्यो घटनामियुः तस्मिन् काले। **एकेन** एकत्वसङ्ख्यायुक्तेन, **इषुणा** शरेण, **ताः** भवता अनुग्रहीष्यमाणत्वेन, प्रकृतमदः पुरं, **भिदां** भेदम् , **आनीय नो**ऽस्माकं **हनने** च वधे विषये, **यतिष्यते** यत्नं करिष्यति। शक्ष्यतीत्यर्थः। एतदुक्तं भवति। योऽस्मच्छत्रुः सहायान्तरनिरपेक्षः सन् पुरत्रयसंयोगकाले एकेन शरेण तत् प्रमथ्य तेनैवास्मद्वधे शक्तो भविष्यति सोऽस्मान्निगृह्णीया(त्) नान्य इति। अत्र तदेत्यनेन कालस्य, एकेनेषुणा इति साधनस्य, ताश्च भिदामानीयेति कर्त्तव्यस्य, स च हन्तेति कर्तुश्च नियमः कृतः । ईदृशशक्ति-योगः कस्यापि न स्यादित्यस्माकं जगदवध्यत्वमेवायातमिति तेषामाशयः ॥ ३३ ॥

अथैवं भवत्विति ब्रह्मणानुगृहीते तेषां प्रवृत्तिमाह —

**वरमादाय पुराणान्नाथाद्विधये दुरासदाय पुराणाम् ।**
**पदमतिदैवमयन्ते यतोऽसुराः प्रापुरिति तदैव मयं ते ॥ ३४ ॥**

**वरमिति** । प्रकृता दैत्याः **पुराणात्** चिरन्तनाद् , **नाथाद्** ब्रह्मणः, **वरम्** ईप्सितम् , **आदाय** गृहीत्वा, **तदैव** यस्मिन् काले वरो लब्धः तस्मिन् काल एव , **मयं** मयनामानम् असुरशिल्पिनं, **प्रापुः** प्राप्तवन्तः ।

"*वरो ना भूपजामात्रोर्देवादेरीप्सिते कुधि ।*"

इति **केशवः** । किमर्थं प्रापुरित्यत्राह — **विधय** इति । **पुराणां** पुरीणां, **विधये** निर्मापणायेत्यर्थः । कीदृशाय । **दुरासदाय** दुष्प्रापाय । अलभ्यायेत्यर्थः । अन्येषामिति शेषः । कुतस्ते शिल्पिजनशिरोमणौ विश्वकर्मणि ध्रियमाणे मयं प्रापुरित्यत्राह—**पदमिति** । **असुराः** । जातिपरोऽयं निर्देशः । (अ ? आ)सुरी जातिरित्यर्थः । **यतः** यस्मात् मयात् , **पदं** पुरादिलक्षणं, स्थानम् , **अयन्ते** अद्यापि प्राप्नुवन्ती **ति** इतिहेतौ । असुरजनैर्निज-शिल्पित्वेनाङ्गीकारो मयप्राप्तौ हेतुरित्यर्थः । न केवलमसुरशिल्पित्वमेवेत्यस्य शिल्पातिशयोऽपि हेतुभावं भजते इति प्रकटयन् पदं विशिनष्टि — **अतिदैवमिति** । देवानामिदं दैवं स्वर्गादि, दैवमतिक्रान्तम् अतिदैवं स्वर्गादेरपि विशिष्टतरमित्यर्थः ॥ ३४ ॥

अथ पुरनिर्माणे प्रयुक्तस्य मयस्य प्रवृत्तिमाह —

**पटुमनसा रूप्यायस्स्वर्णमयं त्रिभुवनस्य सारूप्याय ।**
**रमणीयं प्राकारि प्रचिन्त्य तेन च पुरत्रयं प्राकारि ॥ ३५ ॥**

**पटुमनसेति** । **तेन** मयेन, (वि ? प्र)**चिन्त्य** स्मृत्वा । सङ्कल्पमात्रेणेति यावत् । सङ्कल्प एवास्य पुरनिर्माणे सहकारी न तु वासीकुठारादिकमिति भावः । **पुरत्रयं प्राकारि** कृतम् । कथं सङ्कल्पमात्रेण कृतवानित्यत्र तं विशिनष्टि- **पटुमनसेति** । पटु निपुणं मनो

यस्य स तथा। योगप्रभावजमिह पटुत्वं विवक्षितम्। तथा च वक्ष्यति— 'मनसः सद्योगेहाद्' इति। योगप्रभाव(व)तां किमशक्यमिति भावः। पटुमनसा करणेन प्रचिन्त्येति केचित्। तदा गतार्थस्यापि मनस उपादानं पटुत्वविशेषणदानार्थमिति न दोषः। न केवलं सहकार्येव, उपादानमप्यसाधारणमेवासीदिति वक्तुं पुरत्रयं विशिनष्टि-**रूप्यायःस्वर्णमयमिति**। रूप्यं रजतम्।

"**रूप्यं** तु स्त्री विभूषणे।
आहते हेमरजतद्वये रजत एव च॥
त्रि तु प्रशस्तरूपेऽपि रूपणीये"

इति **केशवः**। "द्वन्द्वात परं श्रूयमाणं प्रत्येकमपि संबध्यते" इति न्यायाद् मयटः प्रत्येकमपि संबन्धः – रूप्यमयमयोमयं स्वर्णमयमिति। एतेषामन्यतमेनैव निर्मातव्ये किमर्थमुपादानत्रैविध्यमङ्गीकृतमित्यत्राह – **त्रिभुवनस्येति**। त्रयाणां भुवनानां समाहारः त्रिभुवनम्। पात्रादित्वात् स्त्रीत्वाभावः। तस्य **सारूप्याय** सादृश्याय। भुवनत्रयस्य सत्त्वरजस्तमोमयत्वात् तेषां च शुक्लरक्तकृष्णरूपत्वात् त्रिरूपत्वे पुराणामपि शुक्लादिरूपतया तादृप्यं सम्भावयितुमित्यर्थः। अनेन पुरत्रयप्रातिभत्ये भुवनान्येव पर्याप्तानि न तु पुरान्तराणि इति द्योत्यते। पुनरपि तदेव विशिनष्टि – **रमणीयमिति**। रचनावैचित्र्यान्नयनम(नो)हारीत्यर्थः। तथा **प्राकारि** अतिशयिता बहवो वा प्राकारा यस्मिन् तत्तथा। अतिशायने वा भूमनि वा मत्वर्थीयः। शत्रुभिर्दुर्गम इत्यर्थः॥ ३५॥

अथ पञ्चभिः श्लोकैः पुरत्रयं वर्णयति –

**यत्र सदानवलोकस्थायी मायाबलात् स दानवलोकः।**
**स्थितिमादायामाद्यद् योजनशतमानमभवदायामाद् यत्॥ ३६॥**

**यत्रेति**। **सः** प्रकृतो, **दानवलोकः** दैत्यजनः, **यत्र** पुरत्रये, **स्थितिं** निवासम्, **आदाय** परिगृह्य। विधायेति यावत्। **सदा** सर्वस्मिन् काले, **अमाद्यत्** हृष्टोऽभूत्। यन्निवासा-द्धेतोः दुःखेनानन्तरितत्वेन सुखमेव प्राप्तवानित्यर्थः। अनेन पुराणामचिन्त्यः कोऽप्यनुभावः

प्रत्याय्यते । दानवलोकं विशिनष्टि – **अनवलोकस्थायी(मायाबलात्)** मायायाः मयनिर्मितायाः बलाद् शक्तेर्हेतोः **अनवलोकस्थायी** अनवलोकमविद्यमानोऽवलोकोऽन्यकर्तृकं दर्शनं यथा भवति तथा स्थितिशीलः । मयमायावैचित्र्येणान्यैरदृश्यमानस्तिष्ठन् इत्यर्थः । अनेन पुरान्तरेभ्यो व्यतिरेको दर्शितः । अथास्य परिमाणमाह – **योजनेति** । **यत्** पुरत्रयम्, **आयामात्** आयामो दैर्घ्यं तमाश्रित्य, **योजनशतमानं** चतुष्क्रोशपरिमितो वा अष्टक्रोशपरिमितो वा अध्वा योजनम् ।

"अथ योजनं परमात्मनि ।
अध्वमाने चतुष्क्रोशे मगधादिषु भूमिषु ॥
अष्टक्रोशं तु देशेषु कोसलादिषु मन्वते ।
तथा युक्तिक्रियायां च"

इति **केशवः** । योजनानां शतेनानं परिमाणं यस्य तत्तथा । आयामो विस्तारस्य उपलक्षणम् । उक्तं च श्रीमद्व्यासमुनिना—

"एकैकं योजनशतं विस्तृतं तावदायतम् ।"

इति । अनेन पुरान्तरेभ्यो व्यतिरेको दर्शितः ॥ ३६ ॥

अथ नित्योत्सवादिमत्तया वर्णयति –

**उल्बणनानापणवध्वनि बिभ्राणं वणिग्जनानापणवत् ।**
**द्राघीयोगुरुपरिखं यद् यत्र च केतुयष्टयोऽगुरुपरि खम् ॥ ३७ ॥**

**उल्बणेति** । **यत्** पुरत्रयम्, **उल्बणनानापणवध्वनि** उल्बणः स्फुटो नानाविधः उत्सवदेवपूजाराजयात्राद्यर्थत्वात् अनेकप्रकारः पणवानां डिण्डिमाख्यवाद्यविशेषाणां ध्वनिः नादो यस्मिन् तत्तथा । "स्फुटं प्रव्यक्तमुल्बणम्" इत्यमरः । "पणवस्त्वपि डिण्डिमे । गजस्कन्धेऽपि" इति **केशवः** । **यत्र वणिग्जनान्** वाणिज्यकर्तॄणां जनानां समूहान्,

**बिभ्राणं** दधानम्, अत एव **यच्चापणवत्** निषद्यायुक्तम्। "आपणस्तु निषद्यायाम्" इत्यमरः। यच्च **द्राघीयोगुरुपरिखं** द्राघीयस्यो दीर्घतरा (उरुगु)र्व्यः पृथ्व्यः परिखा यस्मिन् तत्तथा। "खेये तु परिखाम्बुधौ। भूभृत्यपि" इति **केशवः**। **यत्र च** यस्मिन्, **केतुयष्टयः** ध्वजदण्डाः, **उपरि** ऊर्ध्वप्रदेशे, **खं** नीलाकारतया प्रतीयमानम् आकाशम्, **अगुः** गतवन्तः। ध्वजोच्छ्रायो हि प्रशस्यमानोत्कर्षविहो भवति। तथाहि राजानः कविभिरुपश्लोक्यन्ते उद्दण्ड इति॥ ३७॥

अथ परपरिभवाविषयत्वेन वर्णयति –

**यद्युधि नानापत्तिस्यन्दनगजवाजिवाहनानापत्ति।**
**प्राप्य च वासव्यापद् वरूथिनी दश दिशः सवासव्यापत्॥ ३८॥**

यदिति। **वासवी** इन्द्रसंबन्धिनी, **वरूथिनी** सेना, **युधि** युद्धे निमित्ते। युद्धार्थमिति यावत्। **यत्** पुरत्रयं, **प्राप्य** गत्वा, **दश** दशसंख्याकाः, **दिशः** आशाः, **आपत्** प्राप्तवती। नानादिक्षु पलायनमकरोदित्यर्थः। भीत्येति शेषः। युधीत्यत्र "निमित्तात् कर्मसंयोगे सप्तमी वक्तव्या" (पा० सू० वा० २-३-३६) इति सप्तमी। वरूथिनीं विशिनष्टि-**नानेति**। **(नानापत्तिस्यन्दनगजवाजिवाहना)** पत्तिः पदातिः, स्यन्दनो रथः, गजो हस्ती, वाजी तुरगः। स्यन्दनाश्च गजाश्च वाजिनश्चेति द्वन्द्वः। स्यन्दनगजवाजिनश्च ते वाहनानीति विशेषणसमासः। पत्तयश्च स्यन्दनगजवाजिवाहनानि चेति द्वन्द्वः। नानाविधानि पत्तिस्यन्दनगजवाजिवाहनानि यस्यां सा तथा। शक्तिहीनत्वमेव पलायने हेतुः, न तु सामग्रीविरह इति भावः। पुरत्रयं विशिनष्टि - **अनापत्तीति**। अविद्यमाना आपत्ती देवसेनाकृता पीडा यस्य तत्तथा। पुरत्रयं **प्राप्य** प्राप्तिकार्यमकृत्वा बहिर्भागादेव पलायिता देवा इत्यर्थः। देवसेना तु नैतादृशीत्याह – **सवासव्यापदिति**। वासो वासस्थानम्। "अकर्तरि च कारके संज्ञायाम्" (पा० सू० ३-३-१९) इत्यधिकरणे घञ्। वासस्य व्यापत् असुरकृता पीडा तया सह वर्तमाना तथोक्ता। असुरोपमर्दितस्वर्गा इत्यर्थः॥ ३८॥

अथ रत्युद्दीपनत्वेन वर्णयति—

**यत्र च लोलं बकुळं बन्धुत्वादिव बभार लोलम्बकुलम् ।**
**तद्वदशोकारामाः स्तनभारालसगतीरशोका रामाः ॥ ३९ ॥**

**यत्रेति।** यत्र यस्मिन् पुरत्रये, बकुळं कर्तृ केसरशाखी। "केसरो बकुळोऽस्त्रियाम्" इति सिंहः । **लोलम्बकुलं** लोलम्बानां भृङ्गानां कुलं समूहं **बभार** धृतवत् । मकरन्दभरितसुमप्राचुर्याद् भृङ्गव्याप्तमभूदित्यर्थः । बकुलं विशिनष्टि – **लोलमिति ।** **लोलं** वायुवशाच्चलशाखमित्यर्थः । यत्र कविनिर्गोप्याय स्वभावकथनेनात् । अत्र शब्दशक्त्या भ्रमरेषु सतृष्णमिति ध्वन्यते । अत्र यथा ब्राह्मणो ब्राह्मणस्य, क्षत्रियः क्षत्रियस्य सजातीयत्वाद् बन्धुर्भवति तथा लळयोरभेदाङ्गीकार विशेषणविशेष्ययोर्लोलम्बकुळशब्दयोः (लोलम्बकुळशब्दयोः?) सन्धायाभिधानात् एकपदवत् प्रतीयमानत्वेऽपि यः केसरवृक्षः स्वयं लोलं बकुळं भवति तस्य भिन्नार्थमपि शब्दं यल्लोलम्बकुळं तदाश्रयणेन सजातीयत्वाद् लोलम्बकुलान्तरं प्रति बन्धुत्वमुपपन्नं भवति इति लोलम्बकुलभरणे हेतुमुत्प्रेक्षते – **बन्धुत्वादिवेति** । एतदन्यत्राप्यतिदिशति – **तद्वदिति** । यद्वल्लोलं बकुळं बन्धुत्वादिव लोलम्बकुळं बभार तद्वद् बन्धुत्वादिव **अशोकारामाः** बभ्रुः । अशोकप्रधाना आरामाः उपवनानि अशोकारामाः । **अशोकाः** तत्तदभिमतसम्पत्त्या कदाचिदप्यविद्यमानदुःखाः **रामाः** सुन्दरीः बभ्रुः । किसलयकुसुमसमृद्ध्या तदानुकूल्यमाचरन्नित्यर्थः । कीदृशीः । **स्तनभारालसगतीः** स्तनभारेण कुचभरेण हेतुना अलसा मन्दा गतिर्गमनं यासां तास्तथा । सर्वाङ्गसुन्दरी(रि)त्यर्थः । अत्रापि विशेषणविशेष्ययोः अशोकारामपदयोः सन्धायाभिधानात् एकत्वप्रतीतौ सजातीयत्वाद् अशोकारामाणां अशोका रामाः प्रति बन्धुत्वमुपपन्नं भवति इत्युत्प्रेक्षाहेतुरतिदिष्टः ॥ ३९ ॥

**यत्र न मन्दा रागा भुवो दधानेऽपि विपुलमन्दारागाः ।**
**धुतनानाकुरवापि भ्रमरीसुरवेण सुबहुना कुरवापि ॥ ४० ॥**

**यत्रेति**। अत्र **अपि**शब्दौ वाक्यार्थं समुच्चिन्वन्तौ आभासमानं विरोधं च द्योतयतः। तत्र वाक्यार्थसमुच्चये भिन्नक्रमौ। **यत्र** पुरत्रये, **रागाः** विषयाभिलाषाः, **मन्दाः** अल्पा, **न** भवन्ति अपि।

"रागोऽनुरागे मात्सर्ये रक्तवर्णे रजस्यपि
लाक्षादिरञ्जनद्रव्ये दीप्तौ क्लेशादिकेऽपि च॥"

इति **केशवः**। तत्र हेतुं प्रकटयन् पुरत्रयं विशिनष्टि – **भुव इति**। **विपुलमन्दारागा** विपुला महान्तो मन्दारागा मन्दाराख्या वृक्षाः यासु ताः, **भुवः** प्रदेशान्, **दधाने** बिभ्राणे। प्रदेशानां कुसुमादिसमृद्ध्या रत्युद्दीपकदिव्यतरूपेतत्वं रागवृद्धौ हेतुरित्यर्थः।

"भूर्भूम्यां स्थानमात्रे च सौराष्ट्र्यां व्योमदेहयोः।"

इति **केशवः**। यत्र **कुः** भूमिः, **सुबहुना** भूयसा, **भ्रमरीसुरवेण** भ्रमरीणां भृङ्गीणां सुरवेण शोभनेन रवेण झङ्कारेण कर्त्रा, **अवापि** प्राप्ता च। तत्र हेतुः–**धृतनानाकुरवेति**। कुरवो वृक्षविशेषः। कुसुमकोरकाङ्कुरादिमत्तया नानात्वम्। यत्र मन्दा रागा न भवन्ति तत्रैव मन्दारागा भवन्ति च। यत्र भूमिः सुरवयुक्ता तत्रैव सा कुरवयुक्ता चेति विरोधाभासः॥ ४०॥

अत्र त्रिभिः श्लोकैः मयस्य प्रवृत्तिविशेषमाह -

**तत्र च सरसां मकरोद्धृताः पङ्क्तीः स एव सरसामकरोत्।**
**उत्पलकमलसमेताश्चक्रुः कामोत्सवेषु कमलसमेताः॥ ४१॥**

**तत्र चेति**। **तत्र** पुरत्रये, **स एव** मय एव, **सरसां** वापीनां, **पङ्क्तीः** आवलीः, **अकरोत्**। तत्र तारकाक्षः कमलाक्षो विद्युन्मालीति त्रयाणामसुराणां नामानि। तत्र तारकाक्षस्य हरिर्नाम पुत्रोऽभूत्। तस्य वचनाद् मयः तत्र वापीः कृतवान्। यथोक्तं श्रीमद्व्यासमुनिना –

"तारकाक्षसुतश्चासीद्धरिर्नाम महाबलः।
तपस्तेपे परमकं तेनातुष्यत् पितामहः॥

स तुष्टमवृणोदेवं वापी भवतु नः पुरे ।
शस्त्रैर्विनिहतास्तत्र क्षिप्ताः स्युर्बलवत्तराः ॥
अनुजज्ञे विधाता तं जग्मुर्मयमथासुराः ।
सोऽपि वापीं हरेर्वाक्यादकरोन्मय उत्तमाः ॥ "

इति । इत्थं च यत् प्रमेयमत्रानुक्तं तं सूचयन् सरःपङ्क्तीर्विशिनष्टि – **सरसा** इति । रसो वीर्यं तत्सहिताः । ब्रह्मणोऽनुग्रहात् शस्त्रहतज(न)नैरुज्योत्पादनसामर्थ्यशालिनीरित्यर्थः ।

" **रसो** रागे विषे वीर्ये तिक्तादौ पारदे द्रवे ।
रेतस्यास्वादने हेम्नि निर्यासेऽमृतशब्दयोः ॥ "

इति **केशवः** । तथा **मकरोद्धूताः** मकरैः झषसंज्ञैः । महामत्स्यविशेषैरित्यर्थः । उद्धूता उत्कम्पिताः । मकराश्रयत्वेन सरसां वैपुल्यमगाधता च प्रत्याय्यते ।

" **मकरस्तु** ना ।
निधिभेदे च राशौ च दशमे स्याद् द्वयोः पुनः ।
झषसंज्ञे जलचरे "

इति **केशवः** । तासां रत्युद्दीपनत्वमाह—**उत्पलेति** । **एताः** सरःपङ्क्तयः, **कामोत्सवेषु** सुरतोत्सवेषु, **कं** पुरुषम्, **अलमं मन्दं** चक्रुः? न कमपि । तत्र हेतुः **उत्पलकमल-समेता** इति । उद्दीपनभूतैरुत्पलैः कमलैश्च समेतत्वादित्यर्थः ॥ ४१ ॥

**अपि तेन प्रतिभवनं भवभवनं दत्तनन्दनप्रतिभवनम् ।**
**व्यसनशमायातानि ध्रुवमसुरकुलान्यतः शमायातानि ॥ ४२ ॥**

**अपीति** । **तेन** मयेन, **प्रतिभवनं** भवने भवने, **भवभवनं** भवस्य भवनं निकेतनं च **अतानि** रचितम् । किमर्थं तदित्यत्राह-**व्यसनेति** ।(**व्यसनशमाय**)व्यसनानामनर्थानां शान्तये

अनुद्भवाय। भवभवनं विशिनष्टि-**दत्त** इति। (**दत्तनन्दनप्रतिभवनं**) दत्ता वितीर्णा नन्दने नन्दनोद्याने विषये प्राप्ता प्रतिभा इदं नन्दनोद्यानमिति प्रतीतिर्येन तत् दत्तनन्दनप्रतिभं, तथाविधं वनं यस्मिन् तत्तथा। **अत** एतस्माद्धेतोः, **असुरकुलानि शं** सुखम्, **आयातानि** प्राप्तानि, **ध्रुवं** निश्चितमेतदित्यर्थः ॥ ४२ ॥

**मनसः सद्योगेहान्महासुराणां पृथक् च सद्यो गेहान् ।**
**अकृतासुरतक्षेमे न्यवसंस्त्रिपुरेऽत्र दत्तसुरतक्षेमे ॥ ४३ ॥**

**मनस** इति। **असुरतक्षा** मयः, **महासुराणां पृथक्** प्रत्येकं, **मनसः** मनश्चित्तं सहकारितया तदाश्रित्य। ल्यब्लोपे पञ्चमी। सङ्कल्पमात्रेणेत्यर्थः। **गेहांश्च** गृहाण्यपि, (मयः) **अकृत** कृतवान्।

"न नोदवसितं न स्त्री गेहं पुं भूम्नि वा गृहम्।"

इति **यादवः**। मनो विशिनष्टि—**सद्योगेहा**दिति। सती विशिष्टा योगे चित्तनिरोधे ईहा व्यापारो यस्य तत्तथा। योगप्रभावः किं न साधयेदिति भावः। ते च पुराणि प्राविक्षन्नित्याह - **इम** इति। **इमे** त्रयोऽसुराः, **अत्रे**तस्मिन्, **त्रिपुरे** त्रयाणां पुराणां समाहारस्त्रिपुरम्। "तद्धितार्थ" (पा० सू० २-१-५१) इत्यादिना समासः। पात्रादित्वात् स्त्रीत्वाभावः। तस्मिन् **न्यवसन्** निवासमकुर्वन्। कीदृशे। **दत्तसुरतक्षेमे** दत्तं सुरतस्य क्षेमो रक्षा येन तत्तथा। निवासानां रमणीयतया चोद्दीपनपदार्थसार्थसमृद्ध्या च रत्यनुकूल इत्यर्थः। अनेन तन्मनोरथपरिपूर्तिर्दर्शिता ॥ ४३ ॥

अथ श्लोकद्वयेन तेषां विभागेनावस्थानमाह—

**यो ज्यायानेषु मतः स तारकाक्षो हरेश्च यानेषुमतः ।**
**जेता काञ्चन्यायात् पुर्या द्यां वृत्तिमकृत कां च न्यायात् ॥ ४४ ॥**

**य** इति। **य एषु** त्रिष्वसुरेषु मध्ये, **ज्यायान्** ज्येष्ठो, **मतः** लोकैर्ज्ञातः, **स तारकाक्षः** तारकाक्षो नामासुरः, **काञ्चन्या** काञ्चनविकारेण, **पुर्या** करणेन, **द्यां च** स्वर्गमपि, **आयात्**

प्राप्तवान् । **चशब्दो** वक्ष्यमाणान्तरिक्षभूम्योस्समुच्चयार्थः । ननु इन्द्रे भ्रियमाणे कथमसौ देवशत्रुः स्वर्गं प्राप्तवानित्यत्राह – **हरेरिन्द्रस्य, जेता** अभिभविता । कीदृशस्य । **यानेषुमतः** यानं वाहनं इषुश्शरः । उपलक्षणमेतद् वज्रादेः । ऐरावतोपरि आयुधं गृहीत्वा स्थितस्येत्यर्थः । तारकाक्षस्य बलोत्कर्ष एव हरेः पराजये हेतुः , न तु सामग्र्यभावः । किं बहुना सर्वमप्यमर्यादमेवाचरितवानित्याह--**वृत्तिमिति** । चशब्दोऽलङ्कारपूरणार्थः । उक्तं च **भोजेन** – वा - च - स्म - ह - हि - वै - अहो-खलु-अही इत्यादयोऽलङ्कारपूरणार्थाः इति । असौ **न्यायात्** न्यायं मर्यादामाश्रित्य, **कां** वृत्तिं प्रवृत्तिम् अकृत । न कामपि सर्वामप्यन्यायेन कृतवानित्यर्थः ॥ ४४ ॥

**स्ववशं राजत्यागात् कमलाक्षः खं च खचरराजत्यागात् ।**
**विद्युन्माल्यायस्या स्थलं भुवो भूमयः समाल्या यस्याः ॥ ४५ ॥**

**स्ववशमिति** । अत्र पुर्येत्यनुषज्यते । **कमलाक्षः** तारकाक्षस्य कनीयान्, **राजत्या** रजतविकारेण, पुर्या **खं चा**काशम् , **अगात्** गतवान् । खं विशिनष्टि - **स्ववशमिति** । **खचरराजत्यागात्** खे चरन्तीति खचराः । "चरेष्टः" (पा० सू० ३-२-१६) इति टः । विद्याधराः तेषां राजानः खचरराजाः । "राजाहःसखिभ्यष्टच्" (पा० सू० ५ - ४ - ९१) समासान्तः । तेषां त्यागात् परिभूय निष्कासनाद्धेतोः । **स्ववशं** स्वाधीनं **विद्युन्माली** कमलाक्षस्य कनीयान् , **आयस्या** अयोविकारेण पुर्या, **भुवो** भूमेः, **स्थलं** च प्रदेशमप्यगात् । अगादित्यनुषज्यते **चशब्द**श्च । काञ्चनराजतापेक्षयायःप्रसक्तं न्यग्भावं तिरोधित्सुरायसीं विशिनष्टि --- **भूमय** इति । **यस्याः** आयस्याः पुर्याः, **भूमयः** प्रदेशाः, **समाल्याः** पुष्पसहिताः । उपलक्षणमेतदुत्कृष्टवस्तूनाम् ।

"माल्यं क्ली कुसुमे पुष्पे मालायां चाथ मेयवत् ।
धार्ये"

इति **केशवः** । अत्र तारकाक्षादिसंज्ञाशब्दानां पूर्वं केनचित् प्रमाणेनासिद्धत्वाद्विधातुं योग्यत्वेऽपि तेषां प्रसिद्ध्यतिशयं द्योतयितुमुद्देश्यत्वेन निर्देशः कृत इति बोद्धव्यम् ॥ ४६ ॥

अथ तेषामवस्थितं निगमयन् "वृत्तिमकृत कां च न्यायाद्" इति यदुक्तं न्यायातिक्रमणं तद्विवृणोति –

**इत्यलघोरजवरतस्त्रिजगति स जनश्चचार घोरजवरतः।**
**आस्थायागारं भान्निजघान च तत्र तत्र यागारम्भान्॥ ४६॥**

**इतीति। स जनो** दैत्यजनः, **अजवरतः** अजस्य ब्रह्मणः वरतः अनुग्रहाद्धेतोः, **अगारम्** जातावेकवचनम्, अगाराणीत्यर्थः। **आस्थाय** अधिष्ठाय, **इति** उक्तप्रकारेण, **त्रिजगति चचार** पर्यटितवान्। अजवरं विशिनष्टि – **अलघोरि**ति। **अलघो**र्गुरुतरात्। ईदृशि दैवानुग्रहे किमशक्यमिति भावः। **तत्र तत्र** यत्र यत्र याग आरभ्यते तस्मिंस्तस्मिन्, **यागारम्भान्** यज्ञारम्भान्, **निजघान च** भग्नानकरोत्। तत्र तत्र "नित्यवीप्सयोः" (पा० सू० ८-१-४) इति वीप्सायां द्विर्वचनम्। वीप्सया यज्ञभङ्गस्य क्वचिदपि व्याप्तिभङ्गो नासीदिति द्योत्यते। जनं विशिनष्टि - **घोरजवरत** इति। घोरे भयानके जवे वेगे रतः। यावता वेगेन एकक्षण एव निखिलयज्ञभङ्गो भवेत् तावता वेगेन युक्त इत्यर्थः।

"**घोर**स्त्रिषु भयानके।
कष्ट इत्यपरे द्वे तु सृगाले क्ली तु कुङ्कुमे।"

इति **केशवः**। तथा **भान्** जगत्त्रयेऽपि केनचिदप्यवार्यवीर्यत्वाद् द्योतमानः॥ ४६॥

अथ द्वाभ्यां श्लोकाभ्यामसुरैर्लोकत्रयवासिनो जना बाध्यन्ते स्म इति भङ्ग्यन्तरेणाह–

**प्रेक्ष्य पुरस्ता देवप्रवराः सञ्चारिणीः पुरस्तादेव।**
**यद्यपि विप्रावल्याः स्पर्धां दधुरेव सह च विप्रावल्या॥ ४७॥**

**प्रेक्ष्येति। देवप्रवराः** श्रेष्ठाः इन्द्रादयः, **पुरस्तादेव** स्वेषामग्रत एव, न तु यत्र कुत्रचित् प्रदेशान्तरे। **सञ्चारिणीः** पुनः पुनः सञ्चरन्तीः। "बहुलमाभीक्ष्ण्ये" (पा०सू०३-२-८१) इति णिनिः। **ताः पुरः** पुरीः, **प्रेक्ष्य** प्रेक्षणाद्धेतोः, **विप्राबल्याः** विगतं प्राबल्यं प्रकृष्टबलत्वं येभ्यस्ते तथा, हीनशक्तयः, **यद्यपि विप्रावल्या च** विप्राः ब्राह्मणास्तेषामावलिः समूहः तया। चशब्दादन्तरिक्षवासिना जनेन च **सह स्पर्धां दधुः** सङ्घर्षं धृतवन्तः।

"बहूनां क्षुद्रसाराणां समवायोऽतिदारुणः।"

इति न्यायाद् विमानावलीसहायाः स्पर्धन्ते स्मेत्यर्थः। ननु क्त्वाप्रत्ययस्य वाच्योऽर्थो भाव एव। "अव्ययकृतो भावे भवन्ति" इति वचनात्। द्योत्योऽर्थस्तु पूर्वकाल एव। "समानकर्तृकयोः पूर्वकाले" (पा०सू०३-४-२१) इत्युक्तत्वात्। तदतिरिक्तोऽर्थस्ततो न प्रतीयते। तत् प्रेक्ष्येत्यस्य कुतस्त्येयं हेत्वर्थता ?। उच्यते — क्त्वाप्रत्ययेन भाव एवोच्यते। पूर्वकाल एव द्योत्यते। नान्यः कश्चित्। हेत्वर्थता तु वाक्यार्थसामर्थ्या(त् ?)क्षिप्तैव। किञ्च नियतपूर्वभावि कारणं नियतपश्चाद्भावि कार्यमिति हि न्यायविदः। अनेन क्त्वाप्रत्ययान्तस्य हेत्वर्थतायामेवोपपत्तिः। क्वचिद्धेत्वर्थता दृश्यते। अत्रानुयोगो न युक्तः ॥ ४७॥

स्पर्धा दधुरित्युक्तं, तद्विवृणोति —

**ताश्च विमानसमाना दृष्ट्वा ते चाभवन् विमानसमानाः।**
**ता अपि सुरतत्यागश्चक्रुस्तैरप्यकारि सुरतत्यागः ॥ ४८॥**

**ता** इति। अत्र प्रथमश्चशब्दः पादपूरणार्थः। उक्तं च **भोजेन** -"क, ईशित ह, उ, तु, हि, च इति पादपूरणार्थाः" इति। द्वितीयः पादपूरणार्थ एव सन्नपि आभासमानानुष्ठितानुष्ठानकर्तृसमुच्चयाभासार्थश्च। अपिशब्दो तु देवसमूहापराधसंभोगत्यागलक्षणकर्मसमुच्चयार्थावपि आभासमानानुष्ठितानुष्ठानकर्तृसमुच्चयाभासार्थौ च। अत्र कृभ्वस्तीनां कारकाणां च नित्यसंबन्धाद् भवन्तीरिति सिध्यति। **ताः** पुरीः **विमानसमानाः** भवन्तीः विमानैर्देवयानैः समानाः कामगत्वादिना सदृशीस्सतीः, **दृष्ट्वा ते** देवा, **विमानसमाना अभवन्**। तत्कृतपीडानिवारणासामर्थ्याद् विगतो मानसो मनसि भवो मानोऽभिमानो येषां ते तथा। मनस्यपि मानस्थितेरभावे बहिःस्थितिं प्रति का कथा इति द्योतयितुं मानस(तेः? त्वे)न मानो विशेषितः। **ताः** पुर्यः, **सुरतत्यागोऽपि** सुराणां देवानां ततौ समूहे विषये आगः क्रतुभङ्गादिलक्षम् अपराधं, **चक्रुः** कृतवत्यः। **तैर्दैवैः**, **सुरतत्यागोऽपि** सुरतस्य संभोगस्य त्यागः त्यजनं च, **अकारि** कृतः। **असुरैः** पीडितत्वादेव नष्टसुखा बभूवुरित्यर्थः। ता विमानसमाना दृष्ट्वा ते च विमानसमाना अभूवन्। ता अपि सुरतत्यागश्चक्रुः। ततस्तैरपि सुरतत्यागोऽकारि इति शब्दोऽनुष्ठितानुष्ठानाभासः। तदपेक्षया स्पर्धा दधुरित्युक्तिर्युक्तिमती भवति ॥ ४८॥

अथासुरोपद्रुतः शक्रः युद्धायोद्युक्तवानित्याह—

**अथ पुरतोऽमरपाता स्वचमूश्चलयन् सबाणतोमरपाताः।**
**सुदुरासदसारेभे स्थितः स्वयं योद्धुमसुरसदसारेभे ॥ ४९ ॥**

**अथेति।** **अथ** असुरपीडानन्तरम् ,**अमरपाता** अमरान् पाति रक्षति तच्छीलः,अमरपाता इन्द्रः। तृन्नन्तं रूपम्। **असुरसदसा** असुरसमूहेन सह, **योद्धुमारेभे** उपक्रान्तवान्। कीदृशः। **पुरतः** अग्रे, **स्वचमूः** देवसेनाः, **चलयन्** युद्धाय निर्गमयन्। णिचा चमूनां युद्धं प्रत्यनुद्युक्तता द्योत्यते। तथा **स्वयं सुदुरासदसारेभे** सुदुरासदे सुदुष्प्रापे दुरभिभव इत्यर्थः। अत एव सारे उत्कृष्टे इभे गजे ऐरावते **स्थितः** आसीनः। चमूर्विशिनष्टि— **सबाणेति।** **सबाणतोमरपाताः** तोमर आयुधविशेषः। बाणाश्च तोमराश्चेति द्वन्द्वः। तेषां पातः तथा बाणतोमरपातेन सह वर्त्तमानः तथा सबाणतोमरपाताः पतनं यासां तास्तथा ?। उपलक्षणमेतदायुधान्तरस्य। गृहीतनिखिलायुधा इत्यर्थः ॥ ४९ ॥

अथ युद्धोद्युक्तमिन्द्रं दृष्ट्वा दैत्या अपि युद्धोद्युक्ता बभूवुरित्याह—

**पेतुस्साध्यवसायाः क्षेप्तारो जगति सिद्धसाध्यवसायाः।**
**अतिकटुकवचोरसिते देवबले दानवाः सकवचोरसि ते ॥ ५० ॥**

**पेतुरिति।** **ते** प्रकृता **दानवाः**, **देवबले** देवस्य इन्द्रस्य बले सैन्ये विषये, **पेतुः** देवबलं प्रति योद्धुं पुरत्रयं जग्मुरित्यर्थः। कीदृशाः। **साध्यवसायाः** अध्यवसायेन देवान् जेष्याम इति निश्चयेन सहिताः। तथा **जगति सिद्धसाध्यवसायाः** सिद्धाः साध्याश्च देवविशेषाः तेषां वसायाः **क्षेप्तारः** खण्डयितारः। वसा नाम शरीरान्तर्गतो धातुभेदः। सिद्धसाध्योपादानमन्येषामप्युपलक्षणम्। देवानां पीडयितार इत्यर्थः। न तु स्वर्गस्थानामेवाभिनिहन्तारः चतुर्दशभुवनेषु यत्र क्वचिन्निलीनानामप्यन्विष्य निहन्तारः इति द्योतयितुं जगतीत्युक्तम्। देवबलं विशिनष्टि — (**अतिकटुकवचोरसिते**) अतिकटुकं अतिक्रूरं वचो रे दानवापशदाः! युद्धाय निर्गच्छत इदानीमेव युष्मच्छरीराणि गृध्रादीनां प्रातराशाय

विभज्य दास्याम इत्यादिवचनं रसितं सिंहनादश्च यस्य तत्तथा। तथा **सकवचोरसि** कवचेन उरस्त्राणेन सह वर्तमानं उरो वक्षःप्रदेशो यस्य तत्तथा। युद्धसन्नद्ध इत्यर्थः ॥५०॥

अथ देवा असुराश्च योद्धृप्रतियोद्धृभावेन समागच्छन्त इत्याह –

**क्षुभितांम्बुद्ध्यालोके गम्भीरे विस्तृते च बुद्ध्या लोके।**
**परुषगिरा जघटाते सुरराजघटा च दनुजराजघटा ते ॥ ५१ ॥**

**क्षुभिते**ति। (**सुरराजघटा**) सुरराजस्य इन्द्रस्य घटा अर्थात् सेनासमूहः, **दनुजराजघटा** दनुजराजानां तारकाक्षादीनां घटा च, **ते** उभे, **परुषगिरा** परुषया श्रुतिकटुकया गिरा वचनेन सह **जघटाते** अन्योन्यं सङ्गते बभूवतुः। घटाद्वयं विशिनष्टि - **क्षुभितेति**। आलोक्यत इत्यालोको रूपं क्षुभितो विकृताम्बुः अम्बुधिः समुद्रः तस्यालोक इवालोको ययोस्ते तथा। क्षुभितसमुद्रवदप्रधृष्यक इत्यर्थः। तथा **लोके** जगति, **बुद्ध्या** धिया, **गम्भीरे** अगाधे, **विस्तृते च** विस्तारशालिन्यौ। न केवलं रूपमात्रेण बुद्ध्यापि समुद्रतुल्ये इत्यर्थः ॥ ५१ ॥

अथ चतुर्भिः श्लोकैर्युद्धं वर्णयति –

**सत्फलकैरत्रासिप्रवरैः समरे न सैनिकैरत्रासि।**
**उन्नदता चापेन प्रणतिर्गुणिना धनुर्भृता चापे न ॥ ५२ ॥**

**सत्फलकैरि**ति। अत्र देवासुरकर्तृके, **समरे** युद्धे, **असिप्रवरैः** असिषु खड्गेषु मध्ये प्रवरैः श्रेष्ठैः,**अत्रासि**। (**सैनिकैः** नात्रासि) असिप्रवरसैनिकान् विशिनष्टि – **सत्फलकैरि**ति। सन्ति परप्रहारनिपुणत्वाद् उत्कृष्टानि फलकानि चर्माणि साहचर्येण वा देहत्राणसाधनतया वा येषाम् असिप्रवराणां च सैनिकानां च तैः तथा। शत्रून् प्रहर्तुमसीनां चलने च सैनिकानां भयाभावे च सत्फलकत्वं हेतुः। **चापेन** धनुषा, **प्रणतिः** आकर्णकर्षणात् कौटिल्यम्, **आपे** प्राप्ता। (**धनुर्भृता च** प्रणतिः **न आपे न** प्राप्ता)। धनुषः कौटिल्ये च धनुर्भृतो नमनाभावे च हेतु**र्गुणिनेति**। गुणो मौर्वी शौर्यादिश्च। **उन्नदते**त्येतदप्युभयसाधारणं विशेषणम् **उन्नदता** शब्दायमानेन। धनुषः शब्दष्टङ्कारः, धनुर्भृतः सिंहनादः ॥ ५२ ॥

**अव्यथितः सद्योद्धा पदमकृत द्रष्टुरग्रतः सद्योद्धा ।**
**घटया शैलीमुख्या दलितोऽप्येषा सुभटशैली मुख्या ॥ ५३ ॥**

**अव्यथित** इति। (अव्यथितः सद्यो द्धा पदमकृतेति ?) । शिलीमुखाः शराः तेषामियं शैलीमुखी ।

"पुलिङ्गः स्याच्छिलीमुखः शरे मधुकरे च द्वे ।"

इति **केशवः**। **शैलीमुख्या घटया** समूहेन, **दलितोऽपि** व्रणितोऽपि, **सद्योद्धा** सन् विशिष्टो योद्धा, **सद्यः** शरपातसमय एव , **द्रष्टुः** प्रहर्तुः, **अग्रतः** पुरस्तात् , अद्धा प्रत्यक्षं, **पदं** पद-विन्यासम् , **अकृत** कृतवान् । शरनिकरव्रणिताङ्गोऽपि पराङ्मुखो नाभूदित्यर्थः । कीदृशः । **अव्यथितः** वीर्यवत्त्वेनाविदितव्यथः । अस्य युक्ततां समर्थयितुम् अर्थान्तरमाह – **एषे**ति । महत्यपि कृच्छ्रे द्विषतः पुरोऽवस्थितिः **मुख्या** श्रेष्ठा, **सुभटशैली** हि, सुभटानां सद्योद्धॄणां शैली स्वभावः । शीलमेव शैली । "प्रज्ञादिभ्यश्च" (पा० सू० ५ - ४-३८) इति स्वार्थेऽण्प्रत्यः । स्वार्थिकाश्च प्रकृ(ति)तो लिङ्गवचनान्यतिवर्तन्तेऽपि इति स्त्रीलिङ्गता ॥५३॥

**क्षुधितेनापि शितेषुव्याप्तेषु विलम्बनं शुना पिशितेषु ।**
**प्रियमशनं प्रत्यूहे न विषक्तं किं प्रयोजनं प्रत्यूहे ॥ ५४ ॥**

**क्षुधितेने**ति । **शुना** सारमेयेण, **क्षुधितेनापि** बुभुक्षितेनापि, **पिशितेषु** मांसेषु, **प्रियम्** इष्टम् , **अशनं** भक्षणं, **प्राति** **विलम्बनं** कालक्षेप, ऊहे । **शितेषुव्याप्तेष्वि**ति । शितैर्निशितैः इषुभिश्शरैः व्याप्तेषु । शल्यनिकरप्रोतेष्वित्यर्थः अर्थान्तरमाह - **ने**ति । **किं प्रयोजनं** फलं, **प्रत्यूहे** विघ्ने, **न विषक्तं** व्याप्तं, भवति । सर्वमपि प्रयोजनं प्रत्यूह-व्याप्तमेवेत्यर्थः । "विघ्नोऽन्तरायः प्रत्यूहः" इत्यमरः ॥ ५४ ॥

**श्वानः कानकवलयं निष्कविशेषांश्च हाटकानकवलयन् ।**
**मत्वामी मांसानि स्फुटं तिरश्चां मनांस्यमीमांसानि ॥ ५५ ॥**

**श्वान** इति । **अमी** रणभूमौ वर्त्तमानाः, **श्वानः** कौलेयकाः, **कानकवलयं** कानकं कनकविकारं वलयं कङ्कणं, **हाटकान्** स्वर्णविकारान् , **निष्कविशेषान्** उरोभूषणं

निष्कः तद्भेदान् । **मांसानि** रक्तवर्णसाम्यात् पिशितानीति **मत्वा अकबलयन्** दष्टवन्तः।

"**निष्को**ऽस्त्री हेम्नि दीनारे साष्टकर्षशते पले ।
अजयश्शाश्वतश्चैनं हेम्न एव पलेऽपठीत् ॥
वक्षोभूषान्तरे कर्षे सज्जनस्तु रहस्यपि । "

इति **केशवः** । कनकवलयादौ रक्ततासाम्यात् मांसमविदुरपत्तोरत्र **भ्रान्तिमान्-अलङ्कारः** । उक्तं च **काव्यप्रकाशकृता** – " भ्रान्तिमानन्यसंवित्तत्तुल्यदर्शने " (१० - ४६) इति । शुनामेति (?) समर्थयितुम् अर्थान्तरं न्यस्यति – **स्फुटमिति**। **तिरश्चां** तिर्यग्योनिजातानां, **मनांसि अमीमांसानि** मीमांसा विचारः तद्रहितानि । **स्फुटं** निश्चितम् एतत् । मीमांसेति "मान्बधदानशानभ्यो दीर्घश्चाभ्यासस्य" (पा० सू० ३-१-६) इति "मानेर्जिज्ञासायाम्" (वा० ३ - १ - ६) इति वचनात् जिज्ञासायां सन्प्रत्ययः। " धातो" रित्यधिकृत्य विधानाभावेन आर्धधातुकसंज्ञाभावात् वलादित्वेऽपीडभावः । " अ प्रत्ययाद् '(पा० सू० ३-३-१०२) इत्यकारप्रत्ययः ।

"अथ **मीमांसा** वेदवाक्यार्थचिन्तके ।
शास्त्रे विचारणायां च "

इति **केशवः** ॥ ५५ ॥

युद्धे देवाः पराजिता आसन्नित्याह –

**तत्र च सा दिव्यापत्सेना भङ्गं सनागसादिव्यापत् ।**
**अपि नानाककुभोऽगाच्छक्रो निर्भ्रमेत्य नाककुभोगात् ॥ ५६ ॥**

**तत्रेति** । **तत्र** युद्धे, सा युद्ध्यमाना, **दिव्या** दिवि भवा, **सेना** चमूः, **भङ्गं च** पराजयं चकारात् पलायनं च, **आपत्** प्राप्तवती । कीदृशी । **सनागसादि-व्यापद्** नागा गजाः, सादिनोऽश्वारोहाः । उपलक्षणमेतत् रथानां पत्तीनां च। तेषां व्यापदा चरणाद्यङ्गभङ्गमरणादिलक्षणया विपदा सह वर्त्तमाना । न केवलं सेनैव, शक्रः स्वयमपि पराजित इत्याह – **अपीति** । **शक्रोऽपि** इन्द्रः स्वयमपि, **नाककुभोगात्** **नाकस्य स्वर्गस्य** कुत्सिताद् असुरैः पीड्यमानत्वेन गर्हिताद् भोगाद् अनुभवाद्धेतोः।

**निर्वेदं** विषयवैराग्यं, **एत्य नानाककुभः** नानाविधाः ककुभः दिशः, **अगात्** गतवान्। एकस्यां दिशि स्थितेर्नैयत्ये दैत्यास्तावदागत्य पीडयिष्यन्तीति मत्वा शक्रस्त्वनियमेन दिक्षु स्थितवानिति द्योतयितुं नानार्थेन ककुभो विशेषिताः ॥ ५६ ॥

जगदीश्वरा विष्ण्वादयोऽपि परिभूता इत्याह –

**असुररुच्चक्रोऽधश्चक्रे तैश्चक्रपाणिरुच्चक्रोधः ।**
**द्रुतवानत्रासमगुणोऽप्यतः के हि तत्र न त्रासमगुः ॥ ५७ ॥**

**असुरैरिति** । **तैः** प्रकृतैः असुरैः, **चक्रपाणिर्विष्णुः**, **अधश्चक्रे** अधोऽधस्तान्नीचैः कृतः । परिभूत इति यावत् । कीदृशः । **उच्चक्रोधः** उच्चः उच्चैर्भूतोऽतिशयितः क्रोधो यस्य स तथा। अत एव **उच्चक्रः** अरिशिरश्छेदार्थ-मुद्धृतं चक्रं सुदर्शनं येन स तथा। **अत्र** एतस्मिन् युद्धे, **असमगुः** असमा विषमास्त्रिसङ्ख्यात्वादयुग्मा गावो नेत्राणि यस्य गणस्य स तथा। **गणोऽपि** एकादश-रुद्राणां वर्गोऽपि, **द्रुतवान्** भीत्या पलायते स्म। महेश्वरांशत्वाद्रुद्रगणान् प्रति पराजयस्यात्यन्ता-संभाव्यतामपिशब्दो द्योतयति। (**के हि तत्र न त्रासमगुः**) इति। सर्वेऽपि त्रासं गतवन्तः। हिशब्द इतिहासप्रसिद्धिं द्योतयति। ननु परमेश्वर एव एकादशरुद्ररूपेण वर्त्तते। तस्यात्र पराजयकथनमप्यनुचितमेव इतिवृत्तनायकत्वात्। उच्यते – अंशिनः परमेश्वरस्य पराजयकथन एवानौचित्यम् । एकादशरुद्रा हि परमेश्वरांशा एव । तेषां पराजयकथने नानौचित्यम्। अन्यथेन्द्रादीनामपि पराजयो न वर्णनीयः स्यात्। तेषामपि परमेश्वरांशत्वात् ॥ ५७ ॥

अथ न केवलमसुरैः कर्मिण एव, योगिनोऽपि बाध्यन्ते स्मेत्याह –

**अभजत मानसमाधिः स्थिरमपि यमिनां विहीयमानसमाधि ।**
**प्रोज्झ्य शुचा रुचमूषुः स्वर्गसद्मे गवि हृतासु चारुचमूषु ॥५८॥**

**अभजतेति**। **आधिर्मनः**पीडा, स्थिरमपि विषयेभ्यः प्रत्याहरणान्निश्चलमपि, **यमिनां** योगिनां,**मानसं** चित्तम्,**अभजत** श्रितवान्। तत्र हेतुः-**विहीयमानसमाधी**ति। विहीयमानो-

ऽसुरभयात्त्यज्यमानः समाधिः ऐकाग्र्यं येन तत्तथा। दिव्या सेना भङ्गमापदित्युक्तम्, ततः सा किमकरोदित्यत्राह — **प्रोज्झ्येति**। **स्वर्गसदो** देवाः, **चारुचमूषु** चार्वीषु शौर्यादिगुणयोगात् सौन्दर्यशालिनीषु, चमूषु, **हतासु** दैत्यैर्निगृहीतासु सतीषु, **शुचा** सेनाहननजनितदुःखेन हेतुना **रुचं** मुखकान्तिं **प्रोज्झ्य** त्यक्त्वा **गांत्र** स्वर्गे वस्तुमशक्यत्वात् भूमौ, **ऊषुः** वासं कृतवन्तः॥ ५८॥

"शक्रो नानाककुभोऽगाद्" इत्युक्तम्। ततः कीदृगस्यावस्थानमित्यत्राह —

**हरिरपि नानाहारस्फुरितः प्राग्भूषणैर्विनानाहारः।**
**प्रविवेश क्रत्वन्ते शोकसमुद्रं दधुश्च शक्रत्वं ते॥ ५९॥**

**हरिरिति**। **हरिरपि** इन्द्रश्च, **क्रत्वन्ते** क्रतूनां यज्ञानामन्ते नाशे सति, **शोकसमुद्रं** समुद्र इवादृष्टपारत्वात् अम्बुधिरिव यः शोकः दुःखं तं, **प्रविवेश** प्रविष्टवान्। कीदृशः। **प्राक्** क्रतुनाशात् पूर्वं, **नानाहारस्फुरितः** नानाविधैश्चरुपुरोडाशादिभेदाद् बहुविधैराहारैः हविर्भागलक्षणैरन्नैः स्फुरितः उपचि(ता?तका)यत्वात् प्राप्तशोभः। अत एव नानाविधैः हारैर्मुक्तादामैः स्फुरितः इति चार्थद्वयमावृत्तिमाश्रित्याभिधातव्यम्। हारो भूषणान्तरस्याप्युपलक्षणम्। "मुक्ताः कामेन बाध्यन्ते" इति न्यायाद् देहसंस्कारादावास्थायुक्त इत्यर्थः।

"**हरिर्ना** विष्णुसूर्येन्द्रचन्द्राग्नियमवायुषु।
अंशौ शक्रहये मुद्गे रुक्मे रुक्माभवर्णके॥
श्वेते वररुचिर्वर्णे व्रुते तु जयमङ्गलः।
हरिद्वर्णेऽपि कपिले त्रिषु त्वेष गुणैर्युते॥
एतैश्चतुर्भिर्द्रि त्वेष मर्त्यजात्यन्तरे भवेत्॥
शूद्रानिषादजे सिंहकपिभेकशुकादिषु।
अश्वेऽश्वभेदे हरितपीतवर्णे"

इति **केशवः**। अत्र प्रागित्युक्तिरेव पश्चादिति पदमाक्षिपति। पश्चात् क्रतुनाशात् परन्तु **अनाहारो** यज्ञाभावाद् भोजनरहितः, अत एव **भूषणैरलङ्कारैर्विना** विनाभूतः।

"वीणा वेणुर्दर्शनीया च नारी शय्या यानं चन्दनं चन्द्रबिम्बम् ।
न भ्राजन्ते क्षुत्पिपासार्दितानां सर्वारम्भास्तण्डुलप्रस्थमूलाः ॥"

इति न्यायाद् देहसंस्कारावस्थारहित इत्यर्थः । देवान् पराजित्यासुराः त्रैलोक्येश्वरा बभूवुरित्याह – दध्रुरिति । ते दैत्याः, **शक्रत्वम्** इन्द्रत्वं, दध्रुः धृतवन्तः ॥ ५९ ॥

पराजिता देवाः किमकुर्वन्नित्याह–

**सा जनता परतापि स्वान्तं बिभ्रत्यपि प्रतापरतापि ।**
**प्रभुमापावननाम प्रतिष्ठितं तज्जजाप पावननाम ॥ ६० ॥**

सेति । सा दैत्यैः परिभूता, **जनता** जनसमूहः,देववर्गः, **परतापि** (**स्वान्तं बिभ्रत्यपि प्रतापरतापि**) दूरादेवारीणां भयजनकत्वं प्रतापः तत्र रतापि । नयशौर्यसम्पन्नापीत्यर्थः । **प्रतिष्ठितं** काशीदक्षिणकैलासादिस्थानेषु प्रतिमासु कृतसन्निधानं, **प्रभुं** परमेश्वरमाप शरणं प्राप्तवती, **अवननाम** प्रणाममकरोच्च । तत् लोकवेदप्रसिद्धं, **पावननाम** पावनं सकृदुच्चारणमात्रेणापि शुद्धिकरं यत् नाम नमश्शिवायेति तत् , **जजाप** सदैव तदुच्चरितवती च । एतदुक्तं भवति – देवास्तावन्नयशौर्ययुक्तत्वेऽपि असुराक्रमणस्य दुर्निवारत्वात् पुरुषकारस्याकिञ्चित्करतामवगम्य दैवमेव शरणमिति मन्यमानाः प्रतिमासु कृतसन्निधानं परमेश्वरं प्राप्य जपनमस्कारादिलक्षणं तपश्चक्रुरिति । उक्तं च –

"दिव्यं वर्षसहस्रं वै तपस्तप्त्वा सुरर्षभाः ।"

इत्यादि ॥ ६० ॥

अथ द्वाभ्यां श्लोकाभ्यामसुरा लब्धस्यैश्वर्यस्य स्थिरीकरणाय परमेश्वरभक्तिमेवाश्रितवन्त इत्याह –

**असुरैरुद्धतरागस्थितैर्वितन्वद्भिरपि विरुद्धतरागः ।**
**धृतपरशौ चेतःस्थे जगत्प्रभौ सततमेव शौचे तस्थे ॥ ६१ ॥**

**असुरैरिति । उद्धतरागस्थितैः** उद्धते उच्छृङ्खले । अनियन्तव्य इति यावत् । रागे विषयाभिलाषे, स्थितैरवस्थितैः, अपि तदा **विरुद्धतरागः** विरुद्धतरं शौचं प्रत्यत्यन्तविरुद्धं यद्रागो यज्ञभङ्गादिलक्षणं पापं तद्, **वितन्वद्भिः** कुर्वाणैः, **अप्यसुरैः सततमेव** सदैव, **शौचे** उत्कर्षहेतौ शुद्धतायां, **तस्थे** अवस्थितम् । तत्र हेतुमाह – **धृत-परशाविति । धृतपरशौ** धृतः परशुः कुठारो येन स तथा । परशुर्मृगादेरुपलक्षणम् । "बिभ्रद्दोर्भिः कुठारम्" इत्याद्युक्तलक्षणमित्यर्थः । **जगत्प्रभौ** परमेश्वरे, **चेतःस्थे** सतत-चिन्तनेन हृदयस्थिते सति । तेषामत्यन्ताशुचिताहेतौ पापकर्मपरत्वे विपर्ययकपरत्वे चापि भगवद्ध्यानं शुद्धिहेतुरासीदित्यर्थः ॥ ६१ ॥

**जित्वा देवप्रभृतिद्विषतो मेरौ दुरासदे वप्रभृति ।**
**यदवापुरहरहस्ते धनं तदखिलं न्यधुश्च पुरहरहस्ते ॥ ६२ ॥**

**जित्वेति । ते** दैत्याः, **वप्रभृति** सानुयुक्ते, अत एव **दुरासदे** दुष्प्रापे, **मेरौ** । तन्मूर्धस्थे स्वर्गे इति यावत् । **देवप्रभृतिद्विषतः** प्रभृतिशब्देनोपदेवाः सिद्धविद्याधरा गृह्यन्ते, तान् **जित्वा । अहरहः** । 'कालाध्वनोः (पा० सू० २-३-५) इत्यादिना द्वितीया । 'नित्य-वीप्सयोः' (पा० सू० ८-१-४) इति द्विर्वचनम् । प्रतिदिनम् । **यद्धनमवापुः** प्राप्तवन्तः, **तदखिलं, पुरहरहस्ते** शिवस्य हस्ते, **न्यधुः** निहितवन्तः । हस्ते इति लोकोक्त्य-नुसारेणोक्तिः ।

"मासानन्यान् गमय चतुरो लोचने मीलयित्वा" ।

इतिवत् । परमेश्वरो नः प्रीयतामिति सर्वस्वं भगवते समर्पयामासुरित्यर्थः ।

"वप्रवाक् पुनः ।
अस्त्री क्षेत्रे वास्तुभूमौ प्राकारे सानुरोधसोः ॥"

इति **केशवः** ॥ ६२ ॥

अथ ऋतुवर्णनादेः काव्यलक्षणत्वात् तस्येदानीमवसर इति तद्वर्णनमारभते । तत्रादौ पञ्चभिः श्लोकैः ऋतून् वर्णयति । तत्राद्येन ऋतूनां सामान्येनाविर्भावः कथ्यते ।

पुनर्द्वाभ्यां पूर्वोत्तरार्धैर्वसन्ताद्याः चत्वारः । ततो द्वाभ्यामेकैकेन हेमन्तः शिशिरश्च वर्ण्यते —

**स्वगुणमपारं पर्याकर्षन्ती दत्तगुच्छपारम्पर्या ।**
**तं जनमाप शुभर्तुश्रेणी किङ्करमनुत्तमा पशुभर्तुः ॥ ६३ ॥**

**स्वगुण** इति । **तं** त्रिजगज्जेतारं, **जनम्** असुरसमूहं, **ऋतुश्रेणी** ऋतूनां वसन्तादीनां कालावयवविशेषाणां श्रेणी पङ्क्तिः, **आप** प्राप्तवती । सेवितुमिति शेषः । जनं विशिनष्टि — **पशुभर्तुः ।** पशुवत् कर्मपाशबद्धा जीवात्मानः पशवः तेषां भर्ता नियामकः परात्मापरपर्यायः परमशिवः पशुभर्ता तस्य । **किङ्करं** दासम् । शिवभक्तासिर्हि सर्वैरप्यभिलषणीया । तस्मादृतूनां तत्प्राप्तिरुचितैवेति भावः । ऋतुश्रेणीं विशिनष्टि — **अपारम्** अनवधिकम् । **स्वगुणम्** जातावेकवचनम् । स्वगुणानित्यर्थः । दोषप्रति-योग्युत्कर्षावहः पदार्थो गुणः । स्वम् आत्मीयं गुणं कुसुमकिसलयादिशालित्वादिकं, **पर्याकर्षन्ती** परितः प्रसारयन्तीत्यर्थः । गुणान् विवृणोति — **दत्तेति** परम्परैव पारम्पर्यम् । "चातुर्वर्ण्यादीनां स्वार्थे उपसङ्ख्यानम्" (पा० सू० वा० ५-१-१२४) इति ष्यञ् । दत्तं वितीर्णम् । आविष्कृतमिति यावत् । गुच्छानां स्तबकानां पारम्पर्यं समूहो यया सा तथा । उपलक्षणमेतत् फलकिसलयादेः । अत एव **शुभा** मनोहारिणीत्यर्थः । अत एव **अनुत्तमा** न विद्यते उत्तमा यस्याः सा तथा ॥ ६३ ॥

**लक्ष्मीर्वासं तेने सरसिरुहां मण्डले च वासन्तेने ।**
**रविकरविधुरं शुचितः स्वकरैर्जनमरमयच्च विधुरंशुचितः ॥ ६४ ॥**

**लक्ष्मीरिति** । **लक्ष्मीः** शोभा । "लक्ष्मीः श्रीभूतिशोभासु" इति **केशवः** । **सरसिरुहां** पद्मानां, **मण्डले** समूहे, **वासन्तेने** वसन्तकालोदिते इने सूर्ये च, **वासं** स्थिति-क्रियां **तेने** । चकारात् प्राप्ते वसन्ते हि प्रतिघाताभावात् पद्मानि सजातानि सूर्यः प्रकृष्ट-प्रकाशश्चासीदित्यर्थः । **विधुश्चन्द्रः**, *जनं लोकं, **स्वकरैः** निजरश्मिभिः, **अरमयच्च** सुख-यामास च ।

"विधुः पुंसि विष्णौ चन्द्रे हुताशने ।
वायौ काले राक्षसे तु द्वे त्रि तु स्यादुपद्रुते ॥"

---

* जगदिति व्याख्यानुसारी पाठः स्यात् ।

इति **केशवः** । कीदृशः । **अंशुचितः** रश्मिभिर्व्याप्तः । सम्पूर्णमण्डल इत्यर्थः । पूर्णस्यैवेन्दोर्हि सकलांशुव्याप्तिः संभवति । जगद्विशिनष्टि – **रविकरेति** । **शुचित** इति सप्तम्यन्तात्तसिः । शुचिः ग्रीष्मावयवो मासः तस्मिन् । **रविकरविधुरं** रविकरैरादित्यरश्मिभिर्हेतुभिर्विधुरं क्लिष्टम् । घर्मार्तमित्यर्थः ।

" विज्ञेयं विधुरं सद्भिः क्लिष्टविक्लिष्टयोरपि ।
विकले प्रत्यवेते च " ।

इति **केशवः** ॥ ६४ ॥

**विरहिभिराशा बभ्रे न जीवने नदति साम्बुराशावभ्रे ।**
**शशिनाकाशे नवभे सकैरवे भूतले च काशेन बभे ॥ ६५ ॥**

**विरहिभिरिति** । **साम्बुराशौ** अम्बुराशिर्जलसमूहः तत्सहिते । वृष्ट्यर्थमुपात्तजले इत्यर्थः । **अभ्रे** मेघे, **नदति** शब्दायमाने सति , **विरहिभिः** । विरहिणश्च विरहिण्यश्च विरहिणः । ' पुमान् स्त्रिया ' (पा०सू० १-२-६७) इत्येकशेषः । तैः । **जीवने** प्राणधारणे, **आशा** इच्छा, **न बभ्रे** न भृता । मेघध्वनेः कामोद्दीपनतया सोढुमशक्यत्वादिति भावः । विरहिणां प्रावृषि जीविताशा नासीदित्यर्थः । **आकाशे** नभसि, **शशिना** चन्द्रेण, **भूतले काशेन** च इक्षुगन्धाख्यतृणविशेषेण च, **बभे** दीप्तम् । शरदि (प्रेम(मेघा) वरणाभावात् शशिनश्च, कुसुमाविर्भावात् काशस्य च दीप्तिरासीदित्यर्थः ।

" काशस्त्विक्षुगन्धाख्यवीरुधि ।
अस्त्री स्त्रीपुंसयोः काशा दीप्तौ काशीति सा स्त्रियाम् । "
वाराणस्याम् "

इति **केशवः** । आकाशं विशिनष्टि - **नवभ** इति । नवानि नूतनानि (भानि) नक्षत्राणि यस्मिंस्तत्तथा । नक्षत्रैश्च बभे इत्यर्थः । क्षेत्राणां नवकं हि प्रावृषि तं विशिनष्टि-**सकैरव** इति । कैरवाणि कुमुदानि तैस्सहिते । कैरवैश्च बभे इत्यर्थः ।

**स्त्री चतुरा गवि कासौ समवृत या सहसि मदनरागविकासौ ।**
**विकसितफलिनीजाता वीक्ष्य दिशो दृग् जनस्य फलिनी जाता ॥ ६६ ॥**

**स्त्रीति** । **सहसि** हेमन्तावयवे मासि । हेमन्तर्ताविति यावत् । **गवि** भूमौ, **या स्त्री** योषित्, **चतुरा** इङ्गिताकारगोपने निपुणा सती, **मदनरागविकासौ** रागो विषयाभिलाषः तदधिष्ठात्री देवता मदनः विकासो विकारः मदनस्य विकारः पुष्पेष्वभिनिवेशः तौ **समवृत** निगूढवती, **असौ का,** न कापि । सर्वापि मदनरागविकासगोपनेऽचतुरासीदित्यर्थः । **जनस्य दृग्** दृष्टिः, **विकसितफलिनीजाता** विकसितानि विकचानि फलिनीजातानि श्यामाकुसुमवृन्दानि यासु ताः, **दिशो** हरितो, **वीक्ष्य फलिनी** दर्शनीयवस्तुदर्शनात् फलवती, **जाता** जज्ञे । "प्रियङ्गुः फलिनी श्यामा" **इत्यमरः** ॥ ६६ ॥

**के न्वेतेऽवश्याये भर्तुर्दारा विजृम्भितेऽवश्या ये ।**
**नाकृत का कुन्दलता कुसुमेनेन्दोः कलासु काकुं दलता ॥ ६७ ॥**

**केन्विति** । **अवश्याये** हिमे, **विजृम्भिते** प्रवृद्धे सति **ये दाराः** जायाः, **भर्तुः** कमितुः अर्थादपराधिनः, । **वश्या** वशङ्गता न भवन्ति **एते के नु,** न केचित् । शिशिरकालवैशिष्ट्यात् सर्वेऽपि दारा वश्या इत्यर्थः । शिशिरेऽपि हेमन्तवद् हिमप्राचुर्यं भवत्येव । तथा च वर्णयन्ति—

"अवनितले शीतरुजः कर्तापि भृशं तुषारलेशी तरुजः ।
पवमानस्तापस्यः स्थापयितामूद्वियोगिनस्तापस्य ॥"

इति । **का** कतमा, **कुन्दलता** कुन्दाख्यो लताविशेषः, **दलता** विकसता **कुसुमेन** हेतुना, धावल्यादिन्दोः **कलासु** काकुं ध्वनिविकारम् । न्यक्कृतिमिति यावत् । **नाकृत** न कृतवती । सर्वापि कुन्दलता कुसुमधावल्याद् इन्दुसादृश्यं धृतवतीत्यर्थः ॥ ६७ ॥

अथ ऋतुवर्णनमुपसंहरन् वनक्रीडामाह —

**इति कृतपूर्व्यापारं जनमृतुरखिलस्तमानुपूर्व्यापारम् ।**
**वनमधिकालोलालि प्राप्य विहृत्यामुना स कालोऽलालि ॥ ६८ ॥**

**इतीति । अखिल ऋतुः** वसन्तादिः, **आनुपूर्व्या** वसन्तादिक्रमेण, **तं जनम्** असुरजनम् , **इति** उक्तप्रकारेण, अरम् अत्यर्थं , **आप** प्राप्तवान् । जनं विशिनष्टि – **कृतेति** । कृतः पूर्व्यापारः पुरां पुरीणां व्यापारः सकललोक (गमन) लक्षणा प्रवृत्तिर्येन स तथा तम् । अनेन कृतकृत्यतया दैत्यानां कामाभिकारित्वमुक्तम् । **अमुना** जनेन, **स** ऋतुलक्षणः **कालः, वनं प्राप्य विहृत्य,** क्रीडित्वा **अलालि** सम्मानितः। कीदृशं वनम् – **अधिकालोलालि** अधिकमत्यर्थं आलोलाः कुसुमात् कुसुमान्तरजिगमिषया चञ्चलाः अलयो भृङ्गा यस्मिन् । अनेन वनस्य रामणीयकत्वमुक्तम् ॥ ६८ ॥

अथ जलक्रीडामाह –

**स्त्रीघटयामा सरसीरेत्य जनोऽयं विलोलयामास रसी ।**
**सलिलं सारवहंसश्रेणीसहिताम्बुजप्रसारवहम् ॥ ६९ ॥**

**स्त्रीघटयेति** । सः प्रकृतः अयं कृतवनविहारो, **जनः स्त्रीघटया अमा** स्त्रीणां समूहेन सह, **सरसीः** वापीः, **एत्य** अवगाह्य, **सलिलं** जलं, **विलोलयामास** विहरणात् कम्पयामास । जनं विशिनष्टि – **रसीति** । **रसी** रागवान् । क्रीडायामिति शेषः। सलिलं विशिनष्टि – **सारवेति** । वहतीति वहः पचाद्यच् । बिसास्वादसञ्जातमदतया आरवेन शब्देन सह वर्तमानया हंसानां श्रेण्या समूहेन सहितानामम्बुजानां प्रसारः प्रसरणं समृद्धिरिति यावत् । तस्य वहमाधारत्वेन स्थितमित्यर्थः ॥ ६९ ॥

अथासुराः कामार्त्तास्सन्तः संभोगे प्रावर्तन्तेत्याह –

**यो भुवने सौमनसः ख्यातः सफलोऽपि भेदनेऽसौ मनसः ।**
**झषकेतोरजनीषुः स्त्रीभिरमी रेमिरे ततो रजनीषु ॥ ७० ॥**

**य इति** । सुमनस एव **सौमनसः** । प्रज्ञादित्वादण् स्वार्थिकः। **झषकेतोः**, कामस्य, **य इषुः** शरः, **भुवने सौमनसः ख्यातः** पुष्पमयत्वेन प्रसिद्धः, **असौ** इषुः, **मनसः** चित्तस्य, **भेदने** शकलीकरणे, **सफलः** सप्रयोजनोऽ**जनि** जातवान् । शराणां हि लक्षभेदः प्रयोजनम् । कामशराणां मनोलक्षत्वात् तद्भेदेन फलवत्त्वमासीदित्यर्थः । असुराणां मनः कामशरविद्ध-मभूदित्युक्तं भवति । यतो मनसः कामशरविद्धत्वं **ततस्तस्माद्धेतोः, अमी** दैत्याः, **रजनीषु** निशासु, **स्त्रीभिः** दयिताभिः, सह **रेमिरे** सम्भोगसुखमनुबभूवुः ॥ ७० ॥

अथ

"इष्टं हि विदुषां लोके समासव्यासधारणम्।"

इत्युक्तनीत्या संक्षेपतः संभोगं वर्णयितुमुपक्रमते। असुरा रेमिरे इत्युक्तम्। तत्रैषां रतेरुद्दीपनं किमासीदित्याशङ्कायामाह—

**उडुघटयामा सद्यो रजनिकृदुदरं विराजयामास द्योः।**
**सुनृषु सुरामास्वाद्यः स्फुरितः स जनस्तदा सुरामास्वाद्य ॥७१॥**

**उडुघटयेति।** **रजनिकृत्** चन्द्रः, **सद्यः** तत्क्षणं, **उडुघटया** नक्षत्रसमूहेन, **अमा** सह, **द्योः** आकाशस्य, **उदरम**न्तर्भागं, **विराजयामास** निजकरनिकरैः प्रकाशयामास। **सुनृषु** शोभनेषु नृषु पुरुषेषु, **सुरामासु** शोभनासु स्त्रीषु, च मध्ये **आद्यः** प्रधानभूतः, **स जनः** असुरजनः स्त्रीजनश्च, यस्मिन् काले चन्द्र उदितवान् **तदा** तस्मिन् काले, **सुरां** मद्यम्, **आस्वाद्य** पीत्वा, **स्फुरितः** चलितः। विकृतिं प्राप्त इति यावत् ॥७१॥

असुराः स्त्रीभिस्सह रेमिरे इत्युक्तम्। ते कीदृशाः स्त्रियोऽपि कीदृश्यः इत्याशङ्कायामाह—

**ते शय्यासु समाल्या मदमदननिरस्तलज्जयासुसमाल्या।**
**विहृतिमुदारामापू रराज तैः सुखिभिरियमुदारामा पूः ॥७२॥**

**त** इति। ते चन्द्रोदयमधुपानाभ्याम् उद्दीपितरतयोऽसुराः, **शय्यासु** तल्पेषु, **समाल्याः सन्तः** माल्यैः स्रग्भिः तदुपलक्षितैः कस्तूरीकर्पूरादिपरिमलद्रव्यैश्च सहिताः। सम्पादितसम्भोगसामग्रीका इत्यर्थः। **मदमदननिरस्तलज्जया** मदः मद्यपानजनितो विकारः मदमदनाभ्यां निरस्ता निर्वासिता लज्जा यस्यास्तया, **असुसमाल्या** असुसमानां दयितानामाल्या समूहेन सह, **उदारां** महतीं सम्भोगलक्षणां, **विहृतिं** क्रीडां **आपुः** प्राप्तवन्तः। अत्र समाल्यतया संभोगस्याविकलता निरस्तलज्जतया निर्यन्त्रणप्रवृत्तिश्च प्रत्याय्यते। ननु पूर्वं 'स्त्रीभिरमी रेमिरे' इत्यनेन यदुक्तं तदेवेदानीमपि 'उदारां विहृतिमापुः'- इत्यनेनाप्युक्तम्, अतोऽत्र पौनरुक्त्यम्। उच्यते - अत्र समाल्यत्वं निरस्तलज्जत्वं च विधेयम्। असुसमाल्या उदारां विहृतिमापुरित्युद्देश्यमेव। अतो न पौनरुक्त्यम्। **इयम्** असुरसम्बन्धिनी, **पूः** पुरी, **सुखिभिः** सुरतसुखयुतैः, **तैरसुरै**र्हेतुभिः, **रराज** शोभते स्म। **कीदृशी**।

**उदारामा** उद्धत आरामः उपवनं यस्याः सा तथा । उपलक्षणमेतत् सौधनदीतीरादेः । अनेन यथाभिलाषं विहरणानुकूल्यं पुर्या उक्तम् ॥ ७२ ॥

अथोत्तराश्वासस्य बीजमुपक्षिपन् असुराणां चरितमुपसंहरति –

**द्युसदामुदयानवतानवता नवता न बताऽश्नुत तन्महसा ।**
**स जनो विजहार सदारसदा रसदार सदा जयतूर्यमपि ॥ ७३ ॥**

**द्युसदामिति** । **तन्महसा** तेषामसुराणां महसा तेजसा हेतुना **नवता,** नूतनता **द्युसदां** देवानाम् , **उदयान्** समृद्धीः, **नाश्नुत** न प्राप्तवती । उदयानां नवत्वं नाम नष्टानां पुनरुत्पत्तिः सा चासुरप्रभावाद्देवानां नाभूदित्यर्थः । बतेति विस्मये । न्यायवृत्तानामन्याय-वृत्तेभ्यो विपदुत्पत्तिराश्चर्यमित्यर्थः । तन्महो विशिनष्टि – **अवतानवतेति** । अवतानो विस्तारः तद्युक्तेन । सर्वातिशायिनेत्यर्थः । **स जनोऽ**सुरजनः, **सदारसदाः** दाराणां दयितानां स(दा? दसा)समूहेन सहितः, **सदा विजहार** चिक्रीड । रसत् शब्दायमानं **जयतूर्यम्** , अन्तरान्तरा **दे**वादीनां जयात्तद्द्योतकतूर्यम् , **आर अपि** प्राप्तश्च ॥ ७३ ॥

अथ ते दुःखासंस्पृष्टमेव सुखमनुबभूवुरित्याह –

**पुरत्रये मुदं दधुर्निवासमापुरत्र ये ।**
**पराभवेन वर्जिताः प्रणामतत्परा भवे ॥ ७४ ॥**

**पुरत्रयेति** । (ये) दैत्याः **अत्रास्मिन्** ब्रह्मणोऽनुग्रहलब्धे, **पुरत्रये निवासं** स्थितिम् , **आपुः** प्राप्तवन्तः । ते **पराभवेन** पराजयेन, **वर्जिताः** त्यक्ताः सन्तो, **मुदं दधुः** धृतवन्तः । अत्र पराभववर्जितत्वमेव विधेयम् अन्यत् सर्वमुद्देश्यमेव । कथमधर्मरतानामेषामेवं जातमित्याशङ्कायां शिवभक्तिरेव तत्र हेतुरिति वक्तुं तान् विशिनष्टि – **प्रणामतत्परा भव** इति । **भवे** शिवे **प्रणामतत्पराः** प्रणामे नमस्कारे तत्पराः। शिवभक्ता इत्यर्थः । अत्यन्तं पापिष्ठानामपि तेषामभ्युदये शिवभक्तिरेव हेतुरित्यर्थः ॥ ७४ ॥

इति **श्रीवैष्णवकुलालङ्कृतेः** कविहृदयसार्वभौमस्य **करुणाकरनाम्नो** विद्वत्प्रवरस्य भागिनेयेन **पङ्कजाक्षनाम्ना** विरचितायां **त्रिपुरदहनव्याख्यायां हृदयग्राहिण्यां**

प्रथम आश्वासः ॥



## अथ द्वितीय आश्वासः ।

अथ उपक्षिप्तां विपदं प्रतिचिकीर्षूणां देवानां प्रवृत्तिमाह –

**अथ हरिमापन्नत्वाद्द्युसदः क्षीरोदवसतिमापन् नत्वा ।**
**हृतसर्वस्वा दित्याः कुलजैस्तैरश्विरुद्रवस्वादित्याः ॥ १ ॥**

**अथेति । अथ** पराजयप्राप्त्यनन्तरं, **द्युसदो** देवाः, **आपन्नत्वात्** कृच्छ्रप्राप्ता आपन्नाः तेषां भावस्तत्त्वं तद्धेतोः, **नत्वा** प्रस्थानारम्भ एवेष्टफलसिद्धये नमस्कर्तव्यान् विघ्नेश्वरादीन् प्रणम्य, **हरिं** विष्णुम्, **आपन्** । शरणान्तरमलभमानाः तं शरणं जग्मुरित्यर्थः । यद्वा 'पूर्वकालिक' इत्यस्य प्रायिकत्वाद् मुखं व्यादाय स्वपितीतिवद् नत्वा हरिमापन्निति प्रयोगः । ततो हरिं प्राप्य नेमुरित्यर्थो लभ्यते । कुत्रस्थं हरिमित्याह – **क्षीरोदवसतिमिति** । क्षीरोदः क्षीरसमुद्रः वसतिर्वासस्थानं यस्य स तथा ।

"वसतिस्तु[1] गृहे रात्राववस्थाने जिनाश्रये ।"

इति **केशवः** । के ते द्युसद इत्यत्राह – **अश्विरुद्रवस्वादित्याः** द्वावश्विनौ च एकादशरुद्राश्च अष्टौ वसवश्च द्वादशादित्याश्च तथोक्ताः । द्युसदो विशिनष्टि – **हृतेति** । **(दित्याः)** दितिः असुरमाता तस्याः, **कुलजैः तैः** प्रकृतैः तारकाक्षादिभिस्त्रिभिरसुरैः, **हृतसर्वस्वाः** हृतमपहृतं सर्वं सकलं स्वमात्मीयं वस्तु स्वर्गादिकं येषां ते तथा । दैतेयाना-मादितेयानां च मातृसोदरतानिबन्धनं निसर्गवैरित्वं द्योतयितुं दित्याः कुलजैरित्युक्तम् ॥१॥

अथ पञ्चभिः श्लोकैः देवानां स्तुतिनमस्कारपूर्वकं असुरनिराकरणं प्रति स्वासामर्थ्यं कथयित्वा प्रार्थनां, प्रार्थितस्य तत्प्रार्थनानङ्गीकारं चाह –

**विकसितनालीकान्तर्दलरुचिलोचन! हरे! घनालीकान्त! ।**
**श्रितजनतापावन! ते नमो दयां कुरु जनेऽत्र तापावनते ॥ २ ॥**

---

1. म्रे इति मुद्रितपाठः ।

**विकसितेति ।** **विकसितनालीकान्तर्दलरुचिलोचन** विकसितस्य विकचस्य नालीकस्य यदन्तर्दलं गर्भस्थं पत्रं तस्य रुचिरिव रुचिश्शोभा ययोस्तथाविधे लोचने यस्य तस्य संबोधनं तथा। **हरे** हरिरिति श्रीनामशालिन्! **घनालीकान्त** घनानां मेघानामाली समूहः तद्वत् कान्त, सान्द्रमेघश्यामल! **श्रितजनतापावन** श्रितायाः भक्तिपुरस्सरं (प्राप्तायाः) जनतायाः जनसमूहस्य पावन शुद्धिकर!, **ते** तुभ्यं, **नमः** नमस्क्रिया। अस्त्विति शेषः। **तापावनते** तापेन मनोदाहेन हेतुना अवनते प्रणते, **अत्र** एतस्मिन्नाकारदर्शनेनैवानुमेयदुरवस्थे अस्मिन्, **जने**। अस्मास्विति यावत्। **दयां** करुणां, **कुरु**। प्रार्थनायां लोट् ॥ २ ॥

**अहिता वरदैते ये पुरत्रयेऽस्मिन् वसन्ति वरदैतेये ।**
**शक्ष्यामो हन्तुं न स्वयमिन्द्रस्तैः प्रयाति मोहं तुन्नः ॥ ३ ॥**

**अहिता** इति। हे वरद भक्ताभीष्टप्रद! **ये एते** सर्वेषामपि भयजनकतया सर्वदैव मानसप्रत्यक्षवद् बुद्धिस्थाः, **अहिताः** शत्रवः तारकाक्षादयः, **अस्मिन्** सर्वदा सर्वत्र सञ्चरणाद् अखिलैरप्यवलोक्यमाने, **पुरत्रये वसन्ति** निवासं कुर्वन्ति, तान् **हन्तुं** निगृहीतुं, वयं **न शक्ष्यामः** समर्था न भविष्यामः। भूतवर्तमानयोरिव भविष्यत्कालेऽपि शक्त्यभावोऽनुमेय एव इत्यभिप्रायेण लृट्प्रयोगः। पुरत्रयं विशिंषन्ति — **वरदैतेय** इति। वरा बलवत्त्वेन उत्कृष्टा दैतेया यस्मिन् तत्तथा। एतद् हनने शक्त्यभावे हेतुत्वेनोक्तम्। दण्डापूपिकया स्वशक्त्यभावस्योपपन्नतामाहुः — **स्वयमिति**। **इन्द्रः** त्रयाणामपि लोकानां परमेश्वरात्मा स्वामी, **स्वयं तैः** असुरैः **तुन्नः** व्यथितस्सन्, **मोहं** इतिकर्तव्यतामौढ्यम्, **प्रयाति** प्राप्नोति। इन्द्रस्यासामर्थ्ये तद्रक्ष्याणां **नः** कथं सामर्थ्यमिति यावत् ॥ ३ ॥

**तल्लोकेश! शिवद! नः स्फीतेऽत्र त्रिपुरपावके शशिवदन! ।**
**न यथानघ! नश्यामः स्मरेस्तथा त्वं जनार्दन! घनश्याम! ॥४॥**

**तदिति। लोकेश** लोकानां भुवनानामीश स्वामिन्! **शिवद** भक्तानां मङ्गलप्रद! **शशिवदन** शशीव मनोहरत्वाच्चन्द्र इव वदनं यस्य तस्य सम्बोधनं तथा।

**अनघ** निर्दोष ! **जनार्दन** इति श्रीनामशालिन् ! **घनश्याम** घनो मेघ इव श्यामलवर्ण ! यस्माद् नः शक्त्यभावः तस्मात् **स्फीते** वर्धिते, **अत्र त्रिपुरपावके** त्रिपुर एव पावके अग्नौ, **यथा** येन प्रकारेण, **न नश्यामः** (न) नाशं गच्छामः; **तथा** तेन प्रकारेण, **त्वं नः** अस्मान् , **स्मरेः** निरूपय । सास्तिक्यमिति शेषः(?) ॥ ४ ॥

**यद्वयमतसीदामश्यामल ! लोकत्रयाभिमत ! सीदामः ।**
**स तव महानवमानः तद्रक्षा दीयतामिहानवमा नः ॥ ५ ॥**

**यदिति** । **अतसीदामश्यामल** अतसी उमाख्यो धान्यविशेषः तस्या दाम पुष्पं तद्वत् श्यामल ! **लोकत्रयाभिमत** सर्वान्तरात्मत्वादभीष्टतम ! **यत्** यस्माद् , **वयं** त्वदेकशरणाः, **सीदामः** असुरपीडितत्वात् सादं गच्छामः, **स** सादः, **तव महान्** अनल्पः, **अवमानः** अवमानहेतुः निन्दाहेतुर्भवति । नास्माकमन्यस्य वा कस्यचिद् । अवमानस्य महत्त्वोक्त्या अनुपेक्षणीयत्वं भगवदेकसम्बन्धित्वोक्त्या अवश्यपरिहरणीयत्वं च ध्वन्यते । **तत्** तस्मात् , **नः** अस्माकम् , **इह** सादे विषये, **अनवमा** भयहेतोः अत्युच्छेदादुत्तमा, **रक्षा** त्राणं, दीयताम् । असुरान्निगृह्णीष्वेति यावत् ॥ ५ ॥

**इत्थं तान्ततमानां द्युसदां मतिमुज्झतां तां ततमानाम् ।**
**अर्थितमनुमेने न प्रभुणा तत्केन शक्यमनुमेनेन ॥ ६ ॥**

**इत्थमिति** । **प्रभुणा** जगत्स्वामिना हरिणा, **द्युसदां** देवानाम्, **इत्थम्** अनेन प्रकारेण, **अर्थितम्** असुरनिग्रहलक्षणं प्रार्थितं, **नानुमेने** नानुमतम् । करिष्यामीति न प्रतिज्ञातमित्यर्थः । अनुमतावेव देवस्य योग्यतामापादयितुं द्युसदो विशिनष्टि— **तान्ततमानाम्** इति । अतिशयेन तान्तानां असुरपीडया ग्लानिं गतानाम् । अत एव **ततमानां** व्याप्तगर्वां, **तां** वलवृत्राद्यसुरविषये सर्वैरप्यनुभूतां, **मतिं** बुद्धिम् , **उज्झताम्** ।

"शक्ष्यामो हन्तुं न स्वयमिन्द्रस्तैः प्रयाति मोहं तुन्नः ।"

इति कण्ठोक्त्या त्यजतां च । एतच्चोपपन्नमित्यर्थान्तरेण समर्थयते—**तदिति ।** **तद्** अर्थितम्, **अनुमेनेन** । अत्रान्यत्वं नञभिधत्ते । यथोक्तम्—

"प्रतिषेधेऽप्यसत्तायामन्यत्वे सदृशेऽपि च ।
कुत्साल्पविरहार्थेषु विपक्षे चापि नञ् भवेत् ॥"

इति । उमा पार्वती तस्या इनः स्वामी परमेश्वरः तस्मादन्येन । **केन शक्यं,** न केनापि । यच्छिवव्यतिरिक्तानां सर्वेषामप्यशक्यं तत्र हरेरनुमत्यकरणमेव युक्तमित्यर्थः । सर्वाशक्यत्वसामान्येन विशे(ष ? षा)शक्यत्वसमर्थनाद**र्थान्तरन्यासोऽलङ्कारः** ॥ ६ ॥

अथ हरिस्तत्प्रार्थनानुमत्यकरणे हेतुमाह –

**निरतः परमो देवः सततं परमेश्वरो हि परमोदे वः ।**
**तस्मान्मनसामर्थ्यं कर्तुं भवतां सुरा मम न सामर्थ्यम् ॥ ७ ॥**

**निरत** इति । हे **सुराः** देवाः! **परमः** उत्कृष्टः । सर्वेषामप्यस्माकम् उपरि वर्तमान इत्यर्थः। **परमेश्वरः** रुद्रः, **देवः वः** युष्माकं, **परमोदे** परेषां शत्रूणां मोदे प्रीतौ विषये, **सततं** सदा **निरतः** तत्परो, **हि** यस्मात् (तस्मात्) ततो हेतोः **भवतां** युष्माकं, **मनसाम् अर्थ्यं** प्रार्थनीयम् असुरवधलक्षणं वस्तु, **कर्तुं मम न सामर्थ्यं** शक्तिरिति । मम सामर्थ्याभाव एव युष्मत्प्रार्थनानङ्गीकारे हेतुरित्यर्थः । परमेश्वर इत्यत्राश्वकर्णादिवत् केवलैव रूढिराश्रयणीया, न तु योगसहिता । तथा (सति) परम इति पुनर्विशेषणीयो न स्यात् ॥ ७ ॥

इत्थं स्वासामर्थ्यश्रवणाद् विषण्णान् देवानवलोक्य हरिस्तन्निग्रहायोपायमाह –

**प्रार्थ्यो हि ततो देवः पिनाकपाणिः स एवाहिततोदे वः ।**
**यमगमसावध्यास्ते तं यामस्तस्य तेजसा वध्यास्ते ॥ ८ ॥**

**प्रार्थ्य** इति । अत्र युष्मत्संबोधनगर्भत्वात् सुरा इति सम्बोधनं सिद्ध्यति । **हे सुराः!**

यतः परमेश्वरस्य असुरप्रीतौ निरतत्वं, **ततस्तस्माद्धेतोः, वः** युष्माकम्, **अहिततोदे** शत्रुवधे विषये, **स एव** तन्निग्रहायापि (**प्रार्थ्यः** ।) प्रार्थनीय इत्यर्थः । कीदृशः । **पिनाकपाणिः** पाणौ हस्ते पिनाकः पिनाकाख्यं धनुर्यस्य स तथा । स्वयमेव जगत्कण्टकोद्धरणाय गृहीतशस्त्रः प्रवर्त्तमानस्सन् अस्मत्प्रार्थनासहकृतोऽसुरवधं करिष्यत्येवेति भावः । तस्यापि सामर्थ्याभावे कथं ते वध्याः स्युरित्यत्राह – **तस्ये**ति । हिशब्दोऽवधारणे । **ते** दैत्याः, **तस्य** परमेश्वरस्य, **तेजसा** शक्त्या, **वध्या हि** हन्तुं शक्या एव । तत्र न सन्देह इत्यर्थः । तर्हीदानीमस्माभिः किं कर्तव्यमित्यत्राह – **असौ** परमेश्वरः, **यम् अगं** पर्वतम्, **अध्यास्ते** अधितिष्ठति, **तम् अगं यामः** अधुनैव कैलासाय यास्यामः । वर्तमानसामीप्ये लट् । "गत्यर्थकर्मणि" (पा० सू० २-३-१२) इत्यादिना द्वितीया ॥

अथ हरिः परमेश्वरप्रसादोपलब्धये मतिमकरोदित्याह –

**इत्थममेयज्ञानान्नाथः स्मृत्यै प्रचक्रमे यज्ञानाम् ।**
**परमनुरागमनन्ते तन्वति तरसैव चक्रुरागमनं ते ॥ ९ ॥**

**इत्थ**मिति । समनन्तरोक्तस्य श्लोकद्वयस्यानेन संबन्धः । अत्रार्थसामर्थ्यादुक्त्वेति पदमाक्षिप्यते । **नाथो** जगत्स्वामी हरिः, **इत्थ**मनेन प्रकारेण, उक्त्वा **अमेयज्ञानाद्** अमेये निखिलैरपि दुर्विज्ञेये वस्तुनि यद् ज्ञानं तस्माद्धेतोः । यज्ञप्रियत्वात् परमेश्वरो यज्ञेनैव प्रसाद्य इति जानन्नित्यर्थः । **यज्ञानां** क्रतूनां, **स्मृत्यै प्रचक्रमे** आरब्धवान् । यज्ञेन परमेश्वरं प्रीणयितुं यज्ञान् सस्मारेत्यर्थः । स्मृतिः फलवती चासीदित्याह – **पर**मिति । **ते** यज्ञाः, **अनन्ते** विष्णौ परम् अतिशयि(नम्)... **अनुरागं** स्मृतिलक्षणं प्रमाणं, **तन्वति** कुर्वति सति, **तरसैव** वेगेनैव, **आगमनं चक्रुः** कृतवन्तः । भृत्यानां हि प्रभूणां स्वविषयं स्मरणमपि परोऽनुराग एव इति स्मृतेरनुरागत्वम् । ननु क्रियात्मकत्वादचेतनानां यज्ञानां कथमागमनम् । उच्यते– अधिदेवताविषयेयमुक्तिः न तु क्रियाविषया । अधिदेवता च सर्वेषां पदार्थानामस्त्येव ॥

अथ हरिः परमेश्वरप्रसादनाय कैलासं गतवानित्याह --

**क्रतुरुपसन्नामा यः स्वयममुमादाय रुद्रसन्नामाय ।**
**शम्भुनिवासायागान्मुक्त्वान्यान् सपदि पीतवासा यागान् ॥१०॥**

**क्रतुरिति। सपदि** तत्क्षणमेव, **पीतवासाः** विष्णुः, **स्वयं यः क्रतुरुपसन्नामा** उपसदिति नाम आख्या यस्य, **अमुम्** अभीष्टफलसम्पादनेऽन्तरङ्गभूतम् , **आदाय** परिगृह्य, **अन्यान् (यागान्)** क्रतून् , **मुक्त्वा** प्रस्थाप्य, **शम्भुनिवासाय अगात्** गतवान् । न तु देवानेव प्रस्थापयामास । अनेन कार्यस्य गौरवातिशयः प्रत्याय्यते । किमर्थमगादित्यत्राह — **रुद्रसन्नामायेति** । रुद्रस्य सन्नामाय नमस्काराय । रुद्रयागायेति यावत् ॥ १० ॥

अथ चतुर्भिः श्लोकैः कैलासं वर्णयति —

**यत्र हि सद्योगरतिः स्मरतामंहांसि यच्च सद्यो गिरति ।**
**यन्नाम हरहरेति प्रणद्य मुनिसिद्धवृन्दमहरहरेति ॥ ११ ॥**

**यत्रेति। यत्र** शम्भुनिवासे, **सद्योगिरतिर्हि** सतां जीवब्रह्मैक्यसाक्षात्करणादुत्कृष्टानां योगिनां रतिः स्थितावासक्तिः । हिशब्दः शास्त्रीयां प्रसिद्धिं द्योतयति। **स्मरतां** परमेश्वराधिष्ठानत्वेन कैलासं ध्यायताम् , **अंहांसि** पापानि, **सद्यः** स्मरणसमय एव, **गिरति** निगीर्णानि करोति। नाशयतीति यावत् । **यं** शम्भुनिवासं, **मुनिसिद्धवृन्दं** मुनीनां मध्ये ये सिद्धाः विदिततत्त्वाः तेषां वृन्दं समूहः, **हरहरेति नाम** भगवतो नामधेयं, **प्रणद्य** उच्चार्य **अहरहः** प्रतिदिनं, **एति** प्राप्नोति। अहरहः अत्यन्तसंयोगे द्वितीया। वीप्सायां द्विर्वचनम् ॥ ११ ॥

**यं विविधन्यङ्कुरुते शिरसि वसन् धनद एव धन्यं कुरुते ।**
**यस्माद्वै रूप्यमयादमरगिरिः काञ्चनोऽपि वैरूप्यमयात् ॥ १२ ॥**

**यमिति** । **एवकारो** भिन्नक्रमः । पौनर्वचनिकश्च । **धनदः** यक्षराजः, **शिरसि** शिखरे, **वसन् यमेव धन्यं** उत्कर्षवन्तं, **कुरुते** । वसन्निति हेतौ शता । विशिष्ट-

स्याधेयस्याधारोत्कर्षविगमकत्वादिति भावः। शिरो विशिनष्टि – **विविधन्यङ्कुरुते** इति। विविधानि हर्षक्रोधादिमूलत्वाद् बहुविधानि न्यङ्कूनां मृगविशेषाणां रुतानि शब्दा यस्मिन् तत्तथा। उपलक्षणमेतत् सत्त्वान्तरस्यापि। वस्तूनां स्वधर्मोपेतत्वं हि गुणः। मृगशकुन्याद्यनेक(स)त्त्वोपसेव्यत्वादिकं पर्वतधर्मः। तस्मादनेनापि पर्वतप्रशस्तिरेव कृता इत्यवगन्तव्यम्। वैशब्दोऽवधारणे भिन्नक्रमश्च। **रूप्यमयाद् वै** रजतस्वरूपादेव, **यस्मात्** कैलासाद्धेतोः, **अमरगिरिर्मेरुः, काञ्चनोऽपि** काञ्चनविकारोऽपि, **वैरूप्यं** विकृतरूपताम्, **अयात्** प्राप्तः। "धातूनामस्मि काञ्चनम्" इति **भगवद्वचनात्**, तथा लोकप्रसिद्धेश्च काञ्चनस्यैवोत्कर्षः। तन्मयस्य मेरो रजतमयस्य कैलासस्य प्रभा-प्रसराक्रान्तत्वात् वर्णापकर्षो जात इत्यर्थः। सर्वस्मादुत्कृष्टस्य काञ्चनस्य रजतापेक्षया वर्णहानेरत्यन्तासम्भाव्यताम् **अपिशब्दो** द्योतयति ॥ १२ ॥

**बभ्रु करालं केशं बिभ्राणं दशशिरः पुरा लङ्केशम्।**
**भ्रमयत् पातालसदो रुराव रक्षो यदन्तपातालसदोः ॥ १३ ॥**

**बभ्रिति**। पुरा किल रावणः भुजकण्डूविनोदनाय कैलासमुद्धृत्योत्क्षिप्य उत्क्षिप्य व्यहरत्। तदा हरः कुपितस्सन् स्वाङ्गुष्ठाग्रेण पर्वते गौरवमाहितवान्। तदा स्वोपरि निपततः कैलासस्य गौरवमसहिष्णुः रावणः रोदनमकरोत्। तदेतदनेनोच्यते। **पुरा लङ्केशं** लङ्काया ईशं स्वामीभूतं रावणाख्यं **रक्षः** राक्षसः, **यदन्तपातालसदोः** यस्य कैलासस्यान्तो मूलकोटे-रेकदेशः, तस्य पातेन पतनेन हेतुना अलसा जडीभूता दोषः बाहवो यस्य तत्तथाविधं भूत्वा, **रुराव** 'हा हतोऽह'मित्यादिशब्दमकरोत्। रक्षसो लोकोत्तरतां प्रकटयन् तद्विशिनष्टि-**बभ्रिति** [**बभ्रु** पिङ्गलं, **करालं** भयङ्करं, **केशं** कचं, **बिभ्राणं** दधानं, **पातालसदः** पाताले सीदन्तीति तथा तान् पातालवासिनः। **भ्रमयत्**] ॥ १३ ॥

**तौ च सदानवसानौ गौरीशानौ सदैत्यदानवसानौ।**
**सविलासं यत्र स्तः श्रयति च सुरगणोऽरिसंयत्त्वरतः ॥ १४ ॥**

